# महाभारत - स्त्री पर्व

# ॥ महाभारत स्त्रीपर्व ॥

## विशोकपर्व

### अध्याय ००१

जनमेजय उवाच ॥

हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
धृतराष्ट्रो महाराजः श्रुत्वा किमकरोन्मुने ॥ ००१ ॥

तथैव कौरवो राजा धर्मपुत्रो महामनाः ।
कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः ॥ ००२ ॥

अश्वत्थाम्नः श्रुतं कर्म शापश्चान्योन्यकारितः ।
वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः ॥ ००३ ॥

वैशंपायन उवाच ॥

हते पुत्रशते दीनं छिन्नशाखमिव द्रुमम् ।
पुत्रशोकाभिसंतप्तं धृतराष्ट्रं महीपतिम् ॥ ००४ ॥

ध्यानमूकत्वमापन्नं चिन्तया समभिप्लुतम् ।

अभिगम्य महाप्राज्ञः सञ्जयो वाक्यमब्रवीत्  ॥ ००५  ॥

किं शोचसि महाराज नास्ति शोके सहायता ।
अक्षौहिण्यो हताश्चाष्टौ दश चैव विशां पते  ॥ ००६  ॥

निर्जनेयं वसुमती शून्या संप्रति केवला  ॥ ००६  ॥

नानादिग्भ्यः समागम्य नानादेश्या नराधिपाः ।
सहितास्तव पुत्रेण सर्वे वै निधनं गताः  ॥ ००७  ॥

पितॄणां पुत्रपौत्राणां ज्ञातीनां सुहृदां तथा ।
गुरूणां चानुपूर्व्येण प्रेतकार्याणि कारय  ॥ ००८  ॥

वैशंपायन उवाच  ॥

तच्छ्रुत्वा करुणं वाक्यं पुत्रपौत्रवधार्दितः ।
पपात भुवि दुर्धर्षो वाताहत इव द्रुमः  ॥ ००९  ॥

धृतराष्ट्र उवाच  ॥

हतपुत्रो हतामात्यो हतसर्वसुहृज्जनः ।
दुःखं नूनं भविष्यामि विचरन्पृथिवीमिमाम्  ॥ ०१०  ॥

किं नु बन्धुविहीनस्य जीवितेन ममाद्य वै ।
लूनपक्षस्य इव मे जराजीर्णस्य पक्षिणः  ॥ ०११  ॥

हृतराज्यो हतसुहृद्धतचक्षुश्च वै तथा ।
न भ्राजिष्ये महाप्राज्ञ क्षीणरश्मिरिवांशुमान्  ॥ ०१२  ॥

न कृतं सुहृदां वाक्यं जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च  ॥ ०१३  ॥

सभामध्ये तु कृष्णेन यच्छ्रेयोऽभिहितं मम ।
अलं वैरेण ते राजन्पुत्रः सङ्गृह्यतामिति ॥ ०१४ ॥

तच्च वाक्यमकृत्वाहं भृशं तप्यामि दुर्मतिः ।
न हि श्रोतास्मि भीष्मस्य धर्मयुक्तं प्रभाषितम् ॥ ०१५ ॥

दुर्योधनस्य च तथा वृषभस्येव नर्दतः ।
दुःशासनवधं श्रुत्वा कर्णस्य च विपर्ययम् ॥ ०१६ ॥

द्रोणसूर्योपरागं च हृदयं मे विदीर्यते ॥ ०१६ ॥

न स्मराम्यात्मनः किञ्चित्पुरा सञ्जय दुष्कृतम् ।
यस्येदं फलमद्येह मया मूढेन भुज्यते ॥ ०१७ ॥

नूनं ह्यपकृतं किञ्चिन्मया पूर्वेषु जन्मसु ।
येन मां दुःखभागेषु धाता कर्मसु युक्तवान् ॥ ०१८ ॥

परिणामश्च वयसः सर्वबन्धुक्षयश्च मे ।
सुहृन्मित्रविनाशश्च दैवयोगादुपागतः ॥ ०१९ ॥

कोऽन्योऽस्ति दुःखिततरो मया लोके पुमानिह ॥ ०१९ ॥

तन्मामद्यैव पश्यन्तु पाण्डवाः संशितव्रतम् ।
विवृतं ब्रह्मलोकस्य दीर्घमध्वानमास्थितम् ॥ ०२० ॥

वैशंपायन उवाच ॥

तस्य लालप्यमानस्य बहुशोकं विचिन्वतः ।
शोकापहं नरेन्द्रस्य सञ्जयो वाक्यमब्रवीत् ॥ ०२१ ॥

शोकं राजन्व्यपनुद श्रुतास्ते वेदनिश्चयाः ।
शास्त्रागमाश्च विविधा वृद्धेभ्यो नृपसत्तम ॥ ०२२ ॥

सृञ्जये पुत्रशोकार्ते यदूचुर्मुनयः पुरा ॥ ०२२ ॥

तथा यौवनजं दर्पमास्थिते ते सुते नृप ।
न त्वया सुहृदां वाक्यं ब्रुवतामवधारितम् ॥ ०२३ ॥

स्वार्थश्च न कृतः कश्चिल्लुब्धेन फलगृद्धिना ॥ ०२३ ॥

तव दुःशासनो मन्त्री राधेयश्च दुरात्मवान् ।
शकुनिश्चैव दुष्टात्मा चित्रसेनश्च दुर्मतिः ॥ ०२४ ॥

शल्यश्च येन वै सर्वं शल्यभूतं कृतं जगत् ॥ ०२४ ॥

कुरुवृद्धस्य भीष्मस्य गान्धार्या विदुरस्य च ।
न कृतं वचनं तेन तव पुत्रेण भारत ॥ ०२५ ॥

न धर्मः सत्कृतः कश्चिन्नित्यं युद्धमिति ब्रुवन् ।
क्षपिताः क्षत्रियाः सर्वे शत्रूणां वर्धितं यशः ॥ ०२६ ॥

मध्यस्थो हि त्वमप्यासीर्न क्षमं किञ्चिदुक्तवान् ।
धूर्धरेण त्वया भारस्तुलया न समं धृतः ॥ ०२७ ॥

आदावेव मनुष्येण वर्तितव्यं यथा क्षमम् ।
यथा नातीतमर्थं वै पश्चात्तापेन युज्यते ॥ ०२८ ॥

पुत्रगृद्ध्या त्वया राजन्प्रियं तस्य चिकीर्षता ।
पश्चात्तापमिदं प्राप्तं न त्वं शोचितुमर्हसि ॥ ०२९ ॥

मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति ।

स भ्रष्टो मधुलोभेन शोचत्येव यथा भवान्  ॥ ०३० ॥

अर्थान्न शोचन्प्राप्नोति न शोचन्विन्दते सुखम् ।
न शोचञ्श्रियमाप्नोति न शोचन्विन्दते परम्  ॥ ०३१ ॥

स्वयमुत्पादयित्वाग्निं वस्त्रेण परिवेष्टयेत् ।
दह्यमानो मनस्तापं भजते न स पण्डितः  ॥ ०३२ ॥

त्वयैव ससुतेनायं वाक्यवायुसमीरितः ।
लोभाज्येन च संसिक्तो ज्वलितः पार्थपावकः  ॥ ०३३ ॥

तस्मिन्समिद्धे पतिताः शलभा इव ते सुताः ।
तान्केशवार्चिर्निर्दग्धान्न त्वं शोचितुमर्हसि  ॥ ०३४ ॥

यच्चाश्रुपातकलिलं वदनं वहसे नृप ।
अशास्त्रदृष्टमेतद्धि न प्रशंसन्ति पण्डिताः  ॥ ०३५ ॥

विस्फुलिङ्गा इव ह्येतान्दहन्ति किल मानवान् ।
जहीहि मन्युं बुद्ध्या वै धारयात्मानमात्मना  ॥ ०३६ ॥

एवमाश्वासितस्तेन सञ्जयेन महात्मना ।
विदुरो भूय एवाह बुद्धिपूर्वं परंतप  ॥ ०३७ ॥

---

# अध्याय ००२

वैशंपायन उवाच  ॥

ततोऽमृतसमैर्वाक्यैर्ह्लादयन्पुरुषर्षभम् ।

वैचित्रवीर्यं विदुरो यदुवाच निबोध तत्  ॥ ००१  ॥

विदुर उवाच  ॥

उत्तिष्ठ राजन्किं शेषे धारयात्मानमात्मना ।
स्थिरजङ्गममर्त्यानां सर्वेषामेष निर्णयः  ॥ ००२  ॥

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्  ॥ ००३  ॥

यदा शूरं च भीरुं च यमः कर्षति भारत ।
तत्किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ  ॥ ००४  ॥

अयुध्यमानो म्रियते युध्यमानश्च जीवति ।
कालं प्राप्य महाराज न कश्चिदतिवर्तते  ॥ ००५  ॥

न चाप्येतान्हतान्युद्धे राजञ्शोचितुमर्हसि ।
प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम्  ॥ ००६  ॥

सर्वे स्वाध्यायवन्तो हि सर्वे च चरितव्रताः ।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना  ॥ ००७  ॥

अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
न ते तव न तेषां त्वं तत्र का परिदेवना  ॥ ००८  ॥

हतोऽपि लभते स्वर्गं हत्वा च लभते यशः ।
उभयं नो बहुगुणं नास्ति निष्फलता रणे  ॥ ००९  ॥

तेषां कामदुघा.ण्ल्लोकानिन्द्रः सङ्कल्पयिष्यति ।
इन्द्रस्यातिथयो ह्येते भवन्ति पुरुषर्षभ  ॥ ०१०  ॥

न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया ।
स्वर्गं यान्ति तथा मर्त्या यथा शूरा रणे हताः ॥ ०११ ॥

मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ ०१२ ॥

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ ०१३ ॥

न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ।
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥ ०१४ ॥

अनित्यं जीवितं रूपं यौवनं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासो गृध्येदेषु न पण्डितः ॥ ०१५ ॥

न जानपदिकं दुःखमेकः शोचितुमर्हसि ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ ०१६ ॥

अशोचन्प्रतिकुर्वीत यदि पश्येत्पराक्रमम् ।
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ॥ ०१७ ॥

चिन्त्यमानं हि न व्येति भूयश्चापि विवर्धते ॥ ०१७ ॥

अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मनुष्या मानसैर्दुःखैर्युज्यन्ते येऽल्पबुद्धयः ॥ ०१८ ॥

नार्थो न धर्मो न सुखं यदेतदनुशोचसि ।
न च नापैति कार्यार्थात्त्रिवर्गाच्चैव भ्रश्यते ॥ ०१९ ॥

अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः ।
असंतुष्टाः प्रमुह्यन्ति संतोषं यान्ति पण्डिताः ॥ ०२० ॥

प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतज्ज्ञानस्य सामर्थ्यं न बालैः समतामियात्  ॥ ०२१  ॥

शयानं चानुशयति तिष्ठन्तं चानुतिष्ठति ।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम्  ॥ ०२२  ॥

यस्यां यस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यां तस्यामवस्थायां तत्तत्फलमुपाश्नुते  ॥ ०२३  ॥

---

# अध्याय ००३

धृतराष्ट्र उवाच  ॥

सुभाषितैर्महाप्राज्ञ शोकोऽयं विगतो मम ।
भुय एव तु वाक्यानि श्रोतुमिच्छामि तत्त्वतः  ॥ ००१  ॥

अनिष्टानां च संसर्गादिष्टानां च विवर्जनात् ।
कथं हि मानसैर्दुःखैः प्रमुच्यन्तेऽत्र पण्डिताः  ॥ ००२  ॥

विदुर उवाच  ॥

यतो यतो मनो दुःखात्सुखाद्वापि प्रमुच्यते ।
ततस्ततः शमं लब्ध्वा सुगतिं विन्दते बुधः  ॥ ००३  ॥

अशाश्वतमिदं सर्वं चिन्त्यमानं नरर्षभ ।
कदलीसंनिभो लोकः सारो ह्यस्य न विद्यते  ॥ ००४  ॥

गृहाण्येव हि मर्त्यानामाहुर्देहानि पण्डिताः ।
कालेन विनियुज्यन्ते सत्त्वमेकं तु शोभनम् ॥ ००५ ॥

यथा जीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु वै नरः ।
अन्यद्रोचयते वस्त्रमेवं देहाः शरीरिणाम् ॥ ००६ ॥

वैचित्रवीर्य वासं हि दुःखं वा यदि वा सुखम् ।
प्राप्नुवन्तीह भूतानि स्वकृतेनैव कर्मणा ॥ ००७ ॥

कर्मणा प्राप्यते स्वर्गं सुखं दुःखं च भारत ।
ततो वहति तं भारमवशः स्ववशोऽपि वा ॥ ००८ ॥

यथा च मृन्मयं भाण्डं चक्रारूढं विपद्यते ।
किञ्चित्प्रक्रियमाणं वा कृतमात्रमथापि वा ॥ ००९ ॥

छिन्नं वाप्यवरोप्यन्तमवतीर्णमथापि वा ।
आर्द्रं वाप्यथ वा शुष्कं पच्यमानमथापि वा ॥ ०१० ॥

अवतार्यमाणमापाकादुद्धृतं वापि भारत ।
अथ वा परिभुज्यन्तमेवं देहाः शरीरिणाम् ॥ ०११ ॥

गर्भस्थो वा प्रसूतो वाप्यथ वा दिवसान्तरः ।
अर्धमासगतो वापि मासमात्रगतोऽपि वा ॥ ०१२ ॥

संवत्सरगतो वापि द्विसंवत्सर एव वा ।
यौवनस्थोऽपि मध्यस्थो वृद्धो वापि विपद्यते ॥ ०१३ ॥

प्राक्कर्मभिस्तु भूतानि भवन्ति न भवन्ति च ।
एवं सांसिद्धिके लोके किमर्थमनुतप्यसे ॥ ०१४ ॥

यथा च सलिले राजन्क्रीडार्थमनुसञ्चरन् ।

उन्मज्जेच्च निमज्जेच्च किञ्चित्सत्त्वं नराधिप ॥ ०१५ ॥

एवं संसारगहनादुन्मज्जननिमज्जनात् ।
कर्मभोगेन बध्यन्तः क्लिश्यन्ते येऽल्पबुद्धयः ॥ ०१६ ॥

ये तु प्राज्ञाः स्थिताः सत्ये संसारान्तगवेषिणः ।
समागमज्ञा भूतानां ते यान्ति परमां गतिम् ॥ ०१७ ॥

---

# अध्याय ००४

धृतराष्ट्र उवाच ॥

कथं संसारगहनं विज्ञेयं वदतां वर ।
एतदिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि पृच्छतः ॥ ००१ ॥

विदुर उवाच ॥

जन्मप्रभृति भूतानां क्रियाः सर्वाः शृणु प्रभो ।
पूर्वमेवेह कलले वसते किञ्चिदन्तरम् ॥ ००२ ॥

ततः स पञ्चमेऽतीते मासे मांसं प्रकल्पयेत् ।
ततः सर्वाङ्गसंपूर्णो गर्भो मासे प्रजायते ॥ ००३ ॥

अमेध्यमध्ये वसति मांसशोणितलेपने ।
ततस्तु वायुवेगेन ऊर्ध्वपादो ह्यधःशिराः ॥ ००४ ॥

योनिद्वारमुपागम्य बहून्क्लेशान्समृच्छति ।
योनिसंपीडनाच्चैव पूर्वकर्मभिरन्वितः ॥ ००५ ॥

तस्मान्मुक्तः स संसारादन्यान्पश्यत्युपद्रवान् ।
ग्रहास्तमुपसर्पन्ति सारमेया इवामिषम्  ॥ ००६  ॥

ततः प्राप्तोत्तरे काले व्याधयश्चापि तं तथा ।
उपसर्पन्ति जीवन्तं बध्यमानं स्वकर्मभिः  ॥ ००७  ॥

बद्धमिन्द्रियपाशैस्तं सङ्गस्वादुभिरातुरम् ।
व्यसनान्युपवर्तन्ते विविधानि नराधिप  ॥ ००८  ॥

बध्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः  ॥ ००८  ॥

अयं न बुध्यते तावद्यमलोकमथागतम् ।
यमदूतैर्विकृष्यंश्च मृत्युं कालेन गच्छति  ॥ ००९  ॥

वाग्घीनस्य च यन्मात्रमिष्टानिष्टं कृतं मुखे ।
भूय एवात्मनात्मानं बध्यमानमुपेक्षते  ॥ ०१०  ॥

अहो विनिकृतो लोको लोभेन च वशीकृतः ।
लोभक्रोधमदोन्मत्तो नात्मानमवबुध्यते  ॥ ०११  ॥

कुलीनत्वेन रमते दुष्कुलीनान्विकुत्सयन् ।
धनदर्पेण दृप्तश्च दरिद्रान्परिकुत्सयन्  ॥ ०१२  ॥

मूर्खानिति परानाह नात्मानं समवेक्षते ।
शिक्षां क्षिपति चान्येषां नात्मानं शास्तुमिच्छति  ॥ ०१३  ॥

अध्रुवे जीवलोकेऽस्मिन्यो धर्ममनुपालयन् ।
जन्मप्रभृति वर्तेत प्राप्नुयात्परमां गतिम्  ॥ ०१४  ॥

एवं सर्वं विदित्वा वै यस्तत्त्वमनुवर्तते ।

स प्रमोक्षाय लभते पन्थानं मनुजाधिप ॥ ०१५ ॥

---

# अध्याय ००५

धृतराष्ट्र उवाच ॥

यदिदं धर्मगहनं बुद्ध्या समनुगम्यते ।
एतद्विस्तरशः सर्वं बुद्धिमार्गं प्रशंस मे ॥ ००१ ॥

विदुर उवाच ॥

अत्र ते वर्तयिष्यामि नमस्कृत्वा स्वयंभुवे ।
यथा संसारगहनं वदन्ति परमर्षयः ॥ ००२ ॥

कश्चिन्महति संसारे वर्तमानो द्विजः किल ।
वनं दुर्गमनुप्राप्तो महत्क्रव्यादसङ्कुलम् ॥ ००३ ॥

सिंहव्याघ्रगजाकारैरतिघोरैर्महाशनैः ।
समन्तात्संपरिक्षिप्तं मृत्योरपि भयप्रदम् ॥ ००४ ॥

तदस्य दृष्ट्वा हृदयमुद्वेगमगमत्परम् ।
अभ्युच्छ्रयश्च रोम्णां वै विक्रियाश्च परंतप ॥ ००५ ॥

स तद्वनं व्यनुसरन्विप्रधावनितस्ततः ।
वीक्षमाणो दिशः सर्वाः शरणं क्व भवेदिति ॥ ००६ ॥

स तेषां छिद्रमन्विच्छन्प्रद्रुतो भयपीडितः ।

न च निर्याति वै दूरं न च तैर्विप्रयुज्यते ॥ ००७ ॥

अथापश्यद्वनं घोरं समन्ताद्वागुरावृतम् ।
बाहुभ्यां संपरिष्वक्तं स्त्रिया परमघोरया ॥ ००८ ॥

पञ्चशीर्षधरैर्नागैः शैलैरिव समुन्नतैः ।
नभःस्पृशैर्महावृक्षैः परिक्षिप्तं महावनम् ॥ ००९ ॥

वनमध्ये च तत्राभूदुदपानः समावृतः ।
वल्लीभिस्तृणछन्नाभिर्गूढाभिरभिसंवृतः ॥ ०१० ॥

पपात स द्विजस्तत्र निगूढे सलिलाशये ।
विलग्नश्चाभवत्तस्मि.णल्लतासंतानसङ्कटे ॥ ०११ ॥

पनसस्य यथा जातं वृन्तबद्धं महाफलम् ।
स तथा लम्बते तत्र ऊर्ध्वपादो ह्यधःशिराः ॥ ०१२ ॥

अथ तत्रापि चान्योऽस्य भूयो जात उपद्रवः ।
कूपवीनाहवेलायामपश्यत महागजम् ॥ ०१३ ॥

षड्वक्रं कृष्णशबलं द्विषद्कपद्चारिणम् ।
क्रमेण परिसर्पन्तं वल्लीवृक्षसमावृतम् ॥ ०१४ ॥

तस्य चापि प्रशाखासु वृक्षशाखावलम्बिनः ।
नानारूपा मधुकरा घोररूपा भयावहाः ॥ ०१५ ॥

आसते मधु संभृत्य पूर्वमेव निकेतजाः ॥ ०१५ ॥

भूयो भूयः समीहन्ते मधूनि भरतर्षभ ।
स्वादनीयानि भूतानां न यैर्बालोऽपि तृप्यते ॥ ०१६ ॥

तेषां मधूनां बहुधा धारा प्रस्रवते सदा ।
तां लम्बमानः स पुमान्धारां पिबति सर्वदा ॥ ०१७ ॥

न चास्य तृष्णा विरता पिबमानस्य सङ्कटे ॥ ०१७ ॥

अभीप्सति च तां नित्यमतृप्तः स पुनः पुनः ।
न चास्य जीविते राजन्निर्वेदः समजायत ॥ ०१८ ॥

तत्रैव च मनुष्यस्य जीविताशा प्रतिष्ठिता ।
कृष्णाः श्वेताश्च तं वृक्षं कुट्टयन्ति स्म मूषकाः ॥ ०१९ ॥

व्यालैश्च वनदुर्गान्ते स्त्रिया च परमोग्रया ।
कूपाधस्ताच्च नागेन वीनाहे कुञ्जरेण च ॥ ०२० ॥

वृक्षप्रपाताच्च भयं मूषकेभ्यश्च पञ्चमम् ।
मधुलोभान्मधुकरैः षष्ठमाहुर्महद्भयम् ॥ ०२१ ॥

एवं स वसते तत्र क्षिप्तः संसारसागरे ।
न चैव जीविताशायां निर्वेदमुपगच्छति ॥ ०२२ ॥

---

# अध्याय ००६

धृतराष्ट्र उवाच ॥

अहो खलु महद्दुःखं कृच्छ्रवासं वसत्यसौ ।
कथं तस्य रतिस्तत्र तुष्टिर्वा वदतां वर ॥ ००१ ॥

स देशः क्व नु यत्रासौ वसते धर्मसङ्कटे ।
कथं वा स विमुच्येत नरस्तस्मान्महाभयात् ॥ ००२ ॥

एतन्मे सर्वमाचक्ष्व साधु चेष्टामहे तथा ।
कृपा मे महती जाता तस्याभ्युद्धरणेन हि ॥ ००३ ॥

विदुर उवाच ॥

उपमानमिदं राजन्मोक्षविद्भिरुदाहृतम् ।
सुगतिं विन्दते येन परलोकेषु मानवः ॥ ००४ ॥

यत्तदुच्यति कान्तारं महत्संसार एव सः ।
वनं दुर्गं हि यत्त्वेतत्संसारगहनं हि तत् ॥ ००५ ॥

ये च ते कथिता व्याला व्याधयस्ते प्रकीर्तिताः ।
या सा नारी बृहत्काया अधितिष्ठति तत्र वै ॥ ००६ ॥

तामाहुस्तु जरां प्राज्ञा वर्णरूपविनाशिनीम् ॥ ००६ ॥

यस्तत्र कूपो नृपते स तु देहः शरीरिणाम् ।
यस्तत्र वसतेऽधस्तान्महाहिः काल एव सः ॥ ००७ ॥

अन्तकः सर्वभूतानां देहिनां सर्वहार्यसौ ॥ ००७ ॥

कूपमध्ये च या जाता वल्ली यत्र स मानवः ।
प्रताने लम्बते सा तु जीविताशा शरीरिणाम् ॥ ००८ ॥

स यस्तु कूपवीनाहे तं वृक्षं परिसर्पति ।
षड्वक्त्रः कुञ्जरो राजन्स तु संवत्सरः स्मृतः ॥ ००९ ॥

मुखानि ऋतवो मासाः पादा द्वादश कीर्तिताः ॥ ००९ ॥

ये तु वृक्षं निकृन्तन्ति मूषकाः सततोत्थिताः ।
रात्र्यहानि तु तान्याहुर्भूतानां परिचिन्तकाः ॥ ०१० ॥

ये ते मधुकरास्तत्र कामास्ते परिकीर्तिताः ॥ ०१० ॥

यास्तु ता बहुशो धाराः स्रवन्ति मधुनिस्रवम् ।
तांस्तु कामरसान्विद्याद्यत्र मज्जन्ति मानवाः ॥ ०११ ॥

एवं संसारचक्रस्य परिवृत्तिं स्म ये विदुः ।
ते वै संसारचक्रस्य पाशांश्छिन्दन्ति वै बुधाः ॥ ०१२ ॥

---

# अध्याय ००७

धृतराष्ट्र उवाच ॥

अहोऽभिहितमाख्यानं भवता तत्त्वदर्शिना ।
भूय एव तु मे हर्षः श्रोतुं वागमृतं तव ॥ ००१ ॥

विदुर उवाच ॥

शृणु भूयः प्रवक्ष्यामि मार्गस्यैतस्य विस्तरम् ।
यच्छ्रुत्वा विप्रमुच्यन्ते संसारेभ्यो विचक्षणाः ॥ ००२ ॥

यथा तु पुरुषो राजन्दीर्घमध्वानमास्थितः ।
क्वचित्क्वचिच्छ्रमात्स्थाता कुरुते वासमेव वा ॥ ००३ ॥

एवं संसारपर्याये गर्भवासेषु भारत ।

कुर्वन्ति दुर्बुधा वासं मुच्यन्ते तत्र पण्डिताः ॥ ००४ ॥

तस्माद्ध्वानमेवैतमाहुः शास्त्रविदो जनाः ।
यत्तु संसारगहनं वनमाहुर्मनीषिणः ॥ ००५ ॥

सोऽयं लोकसमावर्तो मर्त्यानां भरतर्षभ ।
चराणां स्थावराणां च गृध्येत्तत्र न पण्डितः ॥ ००६ ॥

शारीरा मानसाश्चैव मर्त्यानां ये तु व्याधयः ।
प्रत्यक्षाश्च परोक्षाश्च ते व्यालाः कथिता बुधैः ॥ ००७ ॥

क्लिश्यमानाश्च तैर्नित्यं हन्यमानाश्च भारत ।
स्वकर्मभिर्महाव्यालैर्नोद्विजन्त्यल्पबुद्धयः ॥ ००८ ॥

अथापि तैर्विमुच्येत व्याधिभिः पुरुषो नृप ।
आवृणोत्येव तं पश्चाज्जरा रूपविनाशिनी ॥ ००९ ॥

शब्दरूपरसस्पर्शैर्गन्धैश्च विविधैरपि ।
मज्जमानं महापङ्के निरालम्बे समन्ततः ॥ ०१० ॥

संवत्सरर्तवो मासाः पक्षाहोरात्रसंधयः ।
क्रमेणास्य प्रलुम्पन्ति रूपमायुस्तथैव च ॥ ०११ ॥

एते कालस्य निधयो नैताञ्जानन्ति दुर्बुधाः ।
अत्राभिलिखितान्याहुः सर्वभूतानि कर्मणा ॥ ०१२ ॥

रथं शरीरं भूतानां सत्त्वमाहुस्तु सारथिम् ।
इन्द्रियाणि हयानाहुः कर्म बुद्धिश्च रश्मयः ॥ ०१३ ॥

तेषां हयानां यो वेगं धावतामनुधावति ।
स तु संसारचक्रेऽस्मिंश्चक्रवत्परिवर्तते ॥ ०१४ ॥

यस्तान्यमयते बुद्ध्या स यन्ता न निवर्तते ।
याम्यमाहू रथं ह्येनं मुह्यन्ते येन दुर्बुधाः ॥ ०१५ ॥

स चैतत्प्राप्नुते राजन्यत्त्वं प्राप्तो नराधिप ।
राज्यनाशं सुहृन्नाशं सुतनाशं च भारत ॥ ०१६ ॥

अनुतर्षुलमेवैतद्दुःखं भवति भारत ।
साधुः परमदुःखानां दुःखभैषज्यमाचरेत् ॥ ०१७ ॥

न विक्रमो न चाप्यर्थो न मित्रं न सुहृज्जनः ।
तथोन्मोचयते दुःखाद्यथात्मा स्थिरसंयमः ॥ ०१८ ॥

तस्मान्मैत्रं समास्थाय शीलमापद्य भारत ।
दमस्त्यागोऽप्रमादश्च ते त्रयो ब्रह्मणो हयाः ॥ ०१९ ॥

शीलरश्मिसमायुक्ते स्थितो यो मानसे रथे ।
त्यक्त्वा मृत्युभयं राजन्ब्रह्मलोकं स गच्छति ॥ ०२० ॥

---

# अध्याय ००८

वैशंपायन उवाच ॥

विदुरस्य तु तद्वाक्यं निशम्य कुरुसत्तमः ।
पुत्रशोकाभिसंतप्तः पपात भुवि मूर्छितः ॥ ००१ ॥

तं तथा पतितं भूमौ निःसञ्ज्ञं प्रेक्ष्य बान्धवाः ।

कृष्णद्वैपायनश्चैव क्षत्ता च विदुरस्तथा ॥ ००२ ॥

सञ्जयः सुहृदश्चान्ये द्वाःस्था ये चास्य संमताः ।
जलेन सुखशीतेन तालवृन्तैश्च भारत ॥ ००३ ॥

पस्पृशुश्च करैर्गात्रं वीजमानाश्च यत्नतः ।
अन्वासन्सुचिरं कालं धृतराष्ट्रं तथागतम् ॥ ००४ ॥

अथ दीर्घस्य कालस्य लब्धसञ्ज्ञो महीपतिः ।
विललाप चिरं कालं पुत्राधिभिरभिप्लुतः ॥ ००५ ॥

धिगस्तु खलु मानुष्यं मानुष्ये च परिग्रहम् ।
यतोमूलानि दुःखानि संभवन्ति मुहुर्मुहुः ॥ ००६ ॥

पुत्रनाशेऽर्थनाशे च ज्ञातिसंबन्धिनामपि ।
प्राप्यते सुमहद्दुःखं विषाग्निप्रतिमं विभो ॥ ००७ ॥

येन दह्यन्ति गात्राणि येन प्रज्ञा विनश्यति ।
येनाभिभूतः पुरुषो मरणं बहु मन्यते ॥ ००८ ॥

तदिदं व्यसनं प्राप्तं मया भाग्यविपर्ययात् ।
तच्चैवाहं करिष्यामि अद्यैव द्विजसत्तम ॥ ००९ ॥

इत्युक्त्वा तु महात्मानं पितरं ब्रह्मवित्तमम् ।
धृतराष्ट्रोऽभवन्मूढः शोकं च परमं गतः ॥ ०१० ॥

अभूच्च तूष्णीं राजासौ ध्यायमानो महीपते ॥ ०१० ॥

तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनः प्रभुः ।
पुत्रशोकाभिसंतप्तं पुत्रं वचनमब्रवीत् ॥ ०११ ॥

धृतराष्ट्र महाबाहो यत्त्वां वक्ष्यामि तच्छृणु ।
श्रुतवानसि मेधावी धर्मार्थकुशलस्तथा ॥ ०१२ ॥

न तेऽस्त्यविदितं किञ्चिद्वेदितव्यं परंतप ।
अनित्यतां हि मर्त्यानां विजानासि न संशयः ॥ ०१३ ॥

अध्रुवे जीवलोके च स्थाने वाशाश्वते सति ।
जीविते मरणान्ते च कस्माच्छोचसि भारत ॥ ०१४ ॥

प्रत्यक्षं तव राजेन्द्र वैरस्यास्य समुद्भवः ।
पुत्रं ते कारणं कृत्वा कालयोगेन कारितः ॥ ०१५ ॥

अवश्यं भवितव्ये च कुरूणां वैशसे नृप ।
कस्माच्छोचसि ताञ्शूरान्गतान्परमिकां गतिम् ॥ ०१६ ॥

जानता च महाबाहो विदुरेण महात्मना ।
यतितं सर्वयत्नेन शमं प्रति जनेश्वर ॥ ०१७ ॥

न च दैवकृतो मार्गः शक्यो भूतेन केनचित् ।
घटतापि चिरं कालं नियन्तुमिति मे मतिः ॥ ०१८ ॥

देवतानां हि यत्कार्यं मया प्रत्यक्षतः श्रुतम् ।
तत्तेऽहं संप्रवक्ष्यामि कथं स्थैर्यं भवेत्तव ॥ ०१९ ॥

पुराहं त्वरितो यातः सभामैन्द्रीं जितक्लमः ।
अपश्यं तत्र च तदा समवेतान्दिवौकसः ॥ ०२० ॥

नारदप्रमुखांश्चापि सर्वान्देवऋषींस्तथा ॥ ०२० ॥

तत्र चापि मया दृष्टा पृथिवी पृथिवीपते ।
कार्यार्थमुपसंप्राप्ता देवतानां समीपतः ॥ ०२१ ॥

उपगम्य तदा धात्री देवानाह समागतान् ।
यत्कार्यं मम युष्माभिर्ब्रह्मणः सदने तदा ॥ ०२२ ॥

प्रतिज्ञातं महाभागास्तच्छीघ्रं संविधीयताम् ॥ ०२२ ॥

तस्यास्तद्वचनं श्रुत्वा विष्णुर्लोकनमस्कृतः ।
उवाच प्रहसन्वाक्यं पृथिवीं देवसंसदि ॥ ०२३ ॥

धृतराष्ट्रस्य पुत्राणां यस्तु ज्येष्ठः शतस्य वै ।
दुर्योधन इति ख्यातः स ते कार्यं करिष्यति ॥ ०२४ ॥

तं च प्राप्य महीपालं कृतकृत्या भविष्यसि ॥ ०२४ ॥

तस्यार्थे पृथिवीपालाः कुरुक्षेत्रे समागताः ।
अन्योन्यं घातयिष्यन्ति दृढैः शस्त्रैः प्रहारिणः ॥ ०२५ ॥

ततस्ते भविता देवि भारस्य युधि नाशनम् ।
गच्छ शीघ्रं स्वकं स्थानं लोकान्धारय शोभने ॥ ०२६ ॥

स एष ते सुतो राज.ण्ल्लोकसंहारकारणात् ।
कलेरंशः समुत्पन्नो गान्धार्या जठरे नृप ॥ ०२७ ॥

अमर्षी चपलश्चापि क्रोधनो दुष्प्रसाधनः ।
दैवयोगात्समुत्पन्ना भ्रातरश्चास्य तादृशाः ॥ ०२८ ॥

शकुनिर्मातुलश्चैव कर्णश्च परमः सखा ।
समुत्पन्ना विनाशार्थं पृथिव्यां सहिता नृपाः ॥ ०२९ ॥

एतमर्थं महाबाहो नारदो वेद तत्त्वतः ॥ ०२९ ॥

आत्मापराधात्पुत्रास्ते विनष्टाः पृथिवीपते ।
मा ताञ्शोचस्व राजेन्द्र न हि शोकेऽस्ति कारणम् ॥ ०३० ॥

न हि ते पाण्डवाः स्वल्पमपराध्यन्ति भारत ।
पुत्रास्तव दुरात्मानो यैरियं घातिता मही ॥ ०३१ ॥

नारदेन च भद्रं ते पूर्वमेव न संशयः ।
युधिष्ठिरस्य समितौ राजसूये निवेदितम् ॥ ०३२ ॥

पाण्डवाः कौरवाश्चैव समासाद्य परस्परम् ।
न भविष्यन्ति कौन्तेय यत्ते कृत्यं तदाचर ॥ ०३३ ॥

नारदस्य वचः श्रुत्वा तदाशोचन्त पाण्डवाः ।
एतत्ते सर्वमाख्यातं देवगुह्यं सनातनम् ॥ ०३४ ॥

कथं ते शोकनाशः स्यात्प्राणेषु च दया प्रभो ।
स्नेहश्च पाण्डुपुत्रेषु ज्ञात्वा दैवकृतं विधिम् ॥ ०३५ ॥

एष चार्थो महाबाहो पूर्वमेव मया श्रुतः ।
कथितो धर्मराजस्य राजसूये क्रतूत्तमे ॥ ०३६ ॥

यतितं धर्मपुत्रेण मया गुह्ये निवेदिते ।
अविग्रहे कौरवाणां दैवं तु बलवत्तरम् ॥ ०३७ ॥

अनतिक्रमणीयो हि विधी राजन्कथञ्चन ।
कृतान्तस्य हि भूतेन स्थावरेण त्रसेन च ॥ ०३८ ॥

भवान्कर्मपरो यत्र बुद्धिश्रेष्ठश्च भारत ।
मुह्यते प्राणिनां ज्ञात्वा गतिं चागतिमेव च ॥ ०३९ ॥

त्वां तु शोकेन संतप्तं मुह्यमानं मुहुर्मुहुः ।

ज्ञात्वा युधिष्ठिरो राजा प्राणानपि परित्यजेत् ॥ ०४० ॥

कृपालुर्नित्यशो वीरस्तिर्यग्योनिगतेष्वपि ।
स कथं त्वयि राजेन्द्र कृपां वै न करिष्यति ॥ ०४१ ॥

मम चैव नियोगेन विधेश्चाप्यनिवर्तनात् ।
पाण्डवानां च कारुण्यात्प्राणान्धारय भारत ॥ ०४२ ॥

एवं ते वर्तमानस्य लोके कीर्तिर्भविष्यति ।
धर्मश्च सुमहांस्तात तप्तं स्याच्च तपश्चिरात् ॥ ०४३ ॥

पुत्रशोकसमुत्पन्नं हुताशं ज्वलितं यथा ।
प्रज्ञाम्भसा महाराज निर्वापय सदा सदा ॥ ०४४ ॥

एतच्छ्रुत्वा तु वचनं व्यासस्यामिततेजसः ।
मुहूर्तं समनुध्याय धृतराष्ट्रोऽभ्यभाषत ॥ ०४५ ॥

महता शोकजालेन प्रणुन्नोऽस्मि द्विजोत्तम ।
नात्मानमवबुध्यामि मुह्यमानो मुहुर्मुहुः ॥ ०४६ ॥

इदं तु वचनं श्रुत्वा तव दैवनियोगजम् ।
धारयिष्याम्यहं प्राणान्यतिष्ये च नशोचितुम् ॥ ०४७ ॥

एतच्छ्रुत्वा तु वचनं व्यासः सत्यवतीसुतः ।
धृतराष्ट्रस्य राजेन्द्र तत्रैवान्तरधीयत ॥ ०४८ ॥

---

# स्त्रीपर्व

## अध्याय ००९

जनमेजय उवाच ॥

गते भगवति व्यासे धृतराष्ट्रो महीपतिः ।
किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि ॥ ००१ ॥

वैशंपायन उवाच ॥

एतच्छ्रुत्वा नरश्रेष्ठ चिरं ध्यात्वा त्वचेतनः ।
सञ्जयं योजयेत्युक्त्वा विदुरं प्रत्यभाषत ॥ ००२ ॥

क्षिप्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः ।
वधूं कुन्तीमुपादाय याश्चान्यास्तत्र योषितः ॥ ००३ ॥

एवमुक्त्वा स धर्मात्मा विदुरं धर्मवित्तमम् ।
शोकविप्रहतज्ञानो यानमेवान्वपद्यत ॥ ००४ ॥

गान्धारी चैव शोकार्ता भर्तुर्वचनचोदिता ।
सह कुन्त्या यतो राजा सह स्त्रीभिरुपाद्रवत् ॥ ००५ ॥

ताः समासाद्य राजानं भृशं शोकसमन्विताः ।
आमन्त्र्यान्योन्यमीयुः स्म भृशमुच्चुक्रुशुस्ततः ॥ ००६ ॥

ताः समाश्वासयत्क्षत्ता ताभ्यश्चार्ततरः स्वयम् ।
अश्रुकण्ठीः समारोप्य ततोऽसौ निर्ययौ पुरात् ॥ ००७ ॥

ततः प्रणादः सञ्जज्ञे सर्वेषु कुरुवेश्मसु ।
आकुमारं पुरं सर्वमभवच्छोककर्शितम् ॥ ००८ ॥

अदृष्टपूर्वा या नार्यः पुरा देवगणैरपि ।
पृथग्जनेन दृश्यन्त तास्तदा निहतेश्वराः ॥ ००९ ॥

प्रकीर्य केशान्सुशुभान्भूषणान्यवमुच्य च ।
एकवस्त्रधरा नार्यः परिपेतुरनाथवत् ॥ ०१० ॥

श्वेतपर्वतरूपेभ्यो गृहेभ्यस्तास्त्वपाक्रमन् ।
गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः ॥ ०११ ॥

तान्युदीर्णानि नारीणां तदा वृन्दान्यनेकशः ।
शोकार्तान्यद्रवन्राजन्किशोरीणामिवाङ्गने ॥ ०१२ ॥

प्रगृह्य बाहून्क्रोशन्त्यः पुत्रान्भ्रातॄन्पितॄनपि ।
दर्शयन्तीव ता ह स्म युगान्ते लोकसङ्क्षयम् ॥ ०१३ ॥

विलपन्त्यो रुदन्त्यश्च धावमानास्ततस्ततः ।
शोकेनाभ्याहतज्ञानाः कर्तव्यं न प्रजज्ञिरे ॥ ०१४ ॥

व्रीडां जग्मुः पुरा याः स्म सखीनामपि योषितः ।
ता एकवस्त्रा निर्लज्जाः श्वश्रूणां पुरतोऽभवन् ॥ ०१५ ॥

परस्परं सुसूक्ष्मेषु शोकेष्वाश्वासयन्स्म याः ।
ताः शोकविह्वला राजन्नुपैक्षन्त परस्परम् ॥ ०१६ ॥

ताभिः परिवृतो राजा रुदतीभिः सहस्रशः ।
निर्ययौ नगराद्दीनस्तूर्णमायोधनं प्रति ॥ ०१७ ॥

शिल्पिनो वणिजो वैश्याः सर्वकर्मोपजीविनः ।
ते पार्थिवं पुरस्कृत्य निर्ययुर्नगराद्बहिः ॥ ०१८ ॥

तासां विक्रोशमानानामार्तानां कुरुसङ्क्षये ।
प्रादुरासीन्महाञ्शब्दो व्यथयन्भुवनान्युत ॥ ०१९ ॥

युगान्तकाले संप्राप्ते भूतानां दह्यतामिव ।
अभावः स्यादयं प्राप्त इति भूतानि मेनिरे ॥ ०२० ॥

भृशमुद्विग्नमनसस्ते पौराः कुरुसङ्क्षये ।
प्राक्रोशन्त महाराज स्वनुरक्तास्तदा भृशम् ॥ ०२१ ॥

---

# अध्याय ०१०

वैशंपायन उवाच ॥

क्रोशमात्रं ततो गत्वा ददृशुस्तान्महारथान् ।
शारद्वतं कृपं द्रौणिं कृतवर्माणमेव च ॥ ००१ ॥

ते तु दृष्ट्वैव राजानं प्रज्ञाचक्षुषमीश्वरम् ।
अश्रुकण्ठा विनिःश्वस्य रुदन्तमिदमब्रुवन् ॥ ००२ ॥

पुत्रस्तव महाराज कृत्वा कर्म सुदुष्करम् ।
गतः सानुचरो राजञ्शक्रलोकं महीपतिः ॥ ००३ ॥

दुर्योधनबलान्मुक्ता वयमेव त्रयो रथाः ।
सर्वमन्यत्परिक्षीणं सैन्यं ते भरतर्षभ ॥ ००४ ॥

इत्येवमुक्त्वा राजानं कृपः शारद्वतस्तदा ।
गान्धारीं पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ ००५ ॥

अभीता युध्यमानास्ते घ्नन्तः शत्रुगणान्बहून् ।
वीरकर्माणि कुर्वाणाः पुत्रास्ते निधनं गताः ॥ ००६ ॥

ध्रुवं संप्राप्य लोकांस्ते निर्मलाञ्शस्त्रनिर्जितान् ।
भास्वरं देहमास्थाय विहरन्त्यमरा इव ॥ ००७ ॥

न हि कश्चिद्धि शूराणां युध्यमानः पराङ्मुखः ।
शस्त्रेण निधनं प्राप्तो न च कश्चित्कृताञ्जलिः ॥ ००८ ॥

एतां तां क्षत्रियस्याहुः पुराणां परमां गतिम् ।
शस्त्रेण निधनं संख्ये तान्न शोचितुमर्हसि ॥ ००९ ॥

न चापि शत्रवस्तेषामृध्यन्ते राज्ञि पाण्डवाः ।
शृणु यत्कृतमस्माभिरश्वत्थामपुरोगमैः ॥ ०१० ॥

अधर्मेण हतं श्रुत्वा भीमसेनेन ते सुतम् ।
सुप्तं शिबिरमाविश्य पाण्डूनां कदनं कृतम् ॥ ०११ ॥

पाञ्चाला निहताः सर्वे धृष्टद्युम्नपुरोगमाः ।
द्रुपदस्यात्मजाश्चैव द्रौपदेयाश्च पातिताः ॥ ०१२ ॥

तथा विशसनं कृत्वा पुत्रशत्रुगणस्य ते ।
प्राद्रवाम रणे स्थातुं न हि शक्यामहे त्रयः ॥ ०१३ ॥

ते हि शूरा महेष्वासाः क्षिप्रमेष्यन्ति पाण्डवाः ।
अमर्षवशमापन्ना वैरं प्रतिजिहीर्षवः ॥ ०१४ ॥

निहतानात्मजाञ्श्रुत्वा प्रमत्तान्पुरुषर्षभाः ।
निनीषन्तः पदं शूराः क्षिप्रमेव यशस्विनि ॥ ०१५ ॥

पाण्डूनां किल्बिषं कृत्वा संस्थातुं नोत्सहामहे ।
अनुजानीहि नो राज्ञि मा च शोके मनः कृथाः ॥ ०१६ ॥

राजंस्त्वमनुजानीहि धैर्यमातिष्ठ चोत्तमम् ।
निष्ठान्तं पश्य चापि त्वं क्षत्रधर्मं च केवलम् ॥ ०१७ ॥

इत्येवमुक्त्वा राजानं कृत्वा चाभिप्रदक्षिणम् ।
कृपश्च कृतवर्मा च द्रोणपुत्रश्च भारत ॥ ०१८ ॥

अवेक्षमाणा राजानं धृतराष्ट्रं मनीषिणम् ।
गङ्गामनु महात्मानस्तूर्णमश्वानचोदयन् ॥ ०१९ ॥

अपक्रम्य तु ते राजन्सर्व एव महारथाः ।
आमन्त्र्यान्योन्यमुद्विग्नास्त्रिधा ते प्रययुस्ततः ॥ ०२० ॥

जगाम हास्तिनपुरं कृपः शारद्वतस्तदा ।
स्वमेव राष्ट्रं हार्दिक्यो द्रौणिर्व्यासाश्रमं ययौ ॥ ०२१ ॥

एवं ते प्रययुर्वीरा वीक्षमाणाः परस्परम् ।
भयार्ताः पाण्डुपुत्राणामागस्कृत्वा महात्मनाम् ॥ ०२२ ॥

समेत्य वीरा राजानं तदा त्वनुदिते रवौ ।
विप्रजग्मुर्महाराज यथेच्छकमरिंदमाः ॥ ०२३ ॥

---

# अयोभीमभञ्जनम्

## अध्याय ०११

वैशंपायन उवाच ॥

हतेषु सर्वसैन्येषु धर्मराजो युधिष्ठिरः ।
शुश्रुवे पितरं वृद्धं निर्यातं गजसाह्वयात् ॥ ००१ ॥

सोऽभ्ययात्पुत्रशोकार्तः पुत्रशोकपरिप्लुतम् ।
शोचमानो महाराज भ्रातृभिः सहितस्तदा ॥ ००२ ॥

अन्वीयमानो वीरेण दाशार्हेण महात्मना ।
युयुधानेन च तथा तथैव च युयुत्सुना ॥ ००३ ॥

तमन्वगात्सुदुःखार्ता द्रौपदी शोककर्शिता ।
सह पाञ्चालयोषिद्भिर्यास्तत्रासन्समागताः ॥ ००४ ॥

स गङ्गामनु वृन्दानि स्त्रीणां भरतसत्तम ।
कुररीणामिवार्तानां क्रोशन्तीनां ददर्श ह ॥ ००५ ॥

ताभिः परिवृतो राजा रुदतीभिः सहस्रशः ।
ऊर्ध्वबाहुभिरार्ताभिर्ब्रुवतीभिः प्रियाप्रिये ॥ ००६ ॥

क्व नु धर्मज्ञता राज्ञः क्व नु साद्यानृशंसता ।
यदावधीत्पितॄन्भ्रातॄन्गुरून्पुत्रान्सखीनपि ॥ ००७ ॥

घातयित्वा कथं द्रोणं भीष्मं चापि पितामहम् ।
मनस्तेऽभून्महाबाहो हत्वा चापि जयद्रथम् ॥ ००८ ॥

किं नु राज्येन ते कार्यं पितॄन्भ्रातॄनपश्यतः ।

अभिमन्युं च दुर्धर्षं द्रौपदेयांश्च भारत ॥ ००९ ॥

अतीत्य ता महाबाहुः क्रोशन्तीः कुररीरिव ।
ववन्दे पितरं ज्येष्ठं धर्मराजो युधिष्ठिरः ॥ ०१० ॥

ततोऽभिवाद्य पितरं धर्मेणामित्रकर्शनाः ।
न्यवेदयन्त नामानि पाण्डवास्तेऽपि सर्वशः ॥ ०११ ॥

तमात्मजान्तकरणं पिता पुत्रवधार्दितः ।
अप्रीयमाणः शोकार्तः पाण्डवं परिषस्वजे ॥ ०१२ ॥

धर्मराजं परिष्वज्य सान्त्वयित्वा च भारत ।
दुष्टात्मा भीममन्वैच्छद्दिधक्षुरिव पावकः ॥ ०१३ ॥

स कोपपावकस्तस्य शोकवायुसमीरितः ।
भीमसेनमयं दावं दिधक्षुरिव दृश्यते ॥ ०१४ ॥

तस्य सङ्कल्पमाज्ञाय भीमं प्रत्यशुभं हरिः ।
भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम् ॥ ०१५ ॥

प्रागेव तु महाबुद्धिर्बुद्ध्वा तस्येङ्गितं हरिः ।
संविधानं महाप्राज्ञस्तत्र चक्रे जनार्दनः ॥ ०१६ ॥

तं तु गृह्यैव पाणिभ्यां भीमसेनमयस्मयम् ।
बभञ्ज बलवान्राजा मन्यमानो वृकोदरम् ॥ ०१७ ॥

नागायुतबलप्राणः स राजा भीममायसम् ।
भङ्क्त्वा विमथितोरस्कः सुस्राव रुधिरं मुखात् ॥ ०१८ ॥

ततः पपात मेदिन्यां तथैव रुधिरोक्षितः ।
प्रपुष्पिताग्रशिखरः पारिजात इव द्रुमः ॥ ०१९ ॥

पर्यगृह्णत तं विद्वान्सूतो गावल्गणिस्तदा ।
मैवमित्यब्रवीच्चैनं शमयन्सान्त्वयन्निव ॥ ०२० ॥

स तु कोपं समुत्सृज्य गतमन्युर्महामनाः ।
हा हा भीमेति चुक्रोश भूयः शोकसमन्वितः ॥ ०२१ ॥

तं विदित्वा गतक्रोधं भीमसेनवधार्दितम् ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ०२२ ॥

मा शुचो धृतराष्ट्र त्वं नैष भीमस्त्वया हतः ।
आयसी प्रतिमा ह्येषा त्वया राजन्निपातिता ॥ ०२३ ॥

त्वां क्रोधवशमापन्नं विदित्वा भरतर्षभ ।
मयापकृष्टः कौन्तेयो मृत्योर्दंष्ट्रान्तरं गतः ॥ ०२४ ॥

न हि ते राजशार्दूल बले तुल्योऽस्ति कश्चन ।
कः सहेत महाबाहो बाह्वोर्निग्रहणं नरः ॥ ०२५ ॥

यथान्तकमनुप्राप्य जीवन्कश्चिन्न मुच्यते ।
एवं बाह्वन्तरं प्राप्य तव जीवेन्न कश्चन ॥ ०२६ ॥

तस्मात्पुत्रेण या सा ते प्रतिमा कारितायसी ।
भीमस्य सेयं कौरव्य तवैवोपहृता मया ॥ ०२७ ॥

पुत्रशोकाभिसंतापाद्धर्मादपहृतं मनः ।
तव राजेन्द्र तेन त्वं भीमसेनं जिघांससि ॥ ०२८ ॥

न च ते तत्क्षमं राजन्हन्यास्त्वं यद्वृकोदरम् ।
न हि पुत्रा महाराज जीवेयुस्ते कथञ्चन ॥ ०२९ ॥

तस्माद्यत्कृतमस्माभिर्मन्यमानैः क्षमं प्रति ।
अनुमन्यस्व तत्सर्वं मा च शोके मनः कृथाः ॥ ०३० ॥

---

# अध्याय ०१२

वैशंपायन उवाच ॥

तत एनमुपातिष्ठञ्शौचार्थं परिचारकाः ।
कृतशौचं पुनश्चैनं प्रोवाच मधुसूदनः ॥ ००१ ॥

राजन्नधीता वेदास्ते शास्त्राणि विविधानि च ।
श्रुतानि च पुराणानि राजधर्माश्च केवलाः ॥ ००२ ॥

एवं विद्वान्महाप्राज्ञ नाकार्षीर्वचनं तदा ।
पाण्डवानधिकाज्ञानन्बले शौर्ये च कौरव ॥ ००३ ॥

राजा हि यः स्थिरप्रज्ञः स्वयं दोषानवेक्षते ।
देशकालविभागं च परं श्रेयः स विन्दति ॥ ००४ ॥

उच्यमानं च यः श्रेयो गृह्णीते नो हिताहिते ।
आपदं समनुप्राप्य स शोचत्यनये स्थितः ॥ ००५ ॥

ततोऽन्यवृत्तमात्मानं समवेक्षस्व भारत ।
राजंस्त्वं ह्यविधेयात्मा दुर्योधनवशे स्थितः ॥ ००६ ॥

आत्मापराधादायस्तस्तत्किं भीमं जिघांससि ।
तस्मात्संयच्छ कोपं त्वं स्वमनुस्मृत्य दुष्कृतम् ॥ ००७ ॥

यस्तु तां स्पर्धया क्षुद्रः पाञ्चालीमानयत्सभाम् ।
स हतो भीमसेनेन वैरं प्रतिचिकीर्षता ॥ ००८ ॥

आत्मनोऽतिक्रमं पश्य पुत्रस्य च दुरात्मनः ।
यदनागसि पाण्डूनां परित्यागः परंतप ॥ ००९ ॥

एवमुक्तः स कृष्णेन सर्वं सत्यं जनाधिप ।
उवाच देवकीपुत्रं धृतराष्ट्रो महीपतिः ॥ ०१० ॥

एवमेतन्महाबाहो यथा वदसि माधव ।
पुत्रस्नेहस्तु धर्मात्मन्धैर्यान्मां समचालयत् ॥ ०११ ॥

दिष्ट्या तु पुरुषव्याघ्रो बलवान्सत्यविक्रमः ।
त्वद्गुप्तो नागमत्कृष्ण भीमो बाह्वन्तरं मम ॥ ०१२ ॥

इदानीं त्वहमेकाग्रो गतमन्युर्गतज्वरः ।
मध्यमं पाण्डवं वीरं स्प्रष्टुमिच्छामि केशव ॥ ०१३ ॥

हतेषु पार्थिवेन्द्रेषु पुत्रेषु निहतेषु च ।
पाण्डुपुत्रेषु मे शर्म प्रीतिश्चाप्यवतिष्ठते ॥ ०१४ ॥

ततः स भीमं च धनञ्जयं च ; माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
पस्पर्श गात्रैः प्ररुदन्सुगात्रा ;नाश्वास्य कल्याणमुवाच चैनान् ॥ ०१५ ॥

---

# अध्याय ०१३

वैशंपायन उवाच ॥

धृतराष्ट्राभ्यनुज्ञातास्ततस्ते कुरुपुङ्गवाः ।
अभ्ययुर्भ्रातरः सर्वे गान्धारीं सहकेशवाः ॥ ००१ ॥

ततो ज्ञात्वा हतामित्रं धर्मराजं युधिष्ठिरम् ।
गान्धारी पुत्रशोकार्ता शप्तुमैच्छदनिन्दिता ॥ ००२ ॥

तस्याः पापमभिप्रायं विदित्वा पाण्डवान्प्रति ।
ऋषिः सत्यवतीपुत्रः प्रागेव समबुध्यत ॥ ००३ ॥

स गङ्गायामुपस्पृश्य पुण्यगन्धं पयः शुचि ।
तं देशमुपसंपेदे परमर्षिर्मनोजवः ॥ ००४ ॥

दिव्येन चक्षुषा पश्यन्मनसानुद्धतेन च ।
सर्वप्राणभृतां भावं स तत्र समबुध्यत ॥ ००५ ॥

स स्नुषामब्रवीत्काले कल्यवादी महातपाः ।
शापकालमवाक्षिप्य शमकालमुदीरयन् ॥ ००६ ॥

न कोपः पाण्डवे कार्यो गान्धारि शममाप्नुहि ।
रजो निगृह्यतामेतच्छृणु चेदं वचो मम ॥ ००७ ॥

उक्तास्यष्टादशाहानि पुत्रेण जयमिच्छता ।
शिवमाशास्स्व मे मातर्युध्यमानस्य शत्रुभिः ॥ ००८ ॥

सा तथा याच्यमाना त्वं काले काले जयैषिणा ।
उक्तवत्यसि गान्धारि यतो धर्मस्ततो जयः ॥ ००९ ॥

न चाप्यतीतां गान्धारि वाचं ते वितथामहम् ।
स्मरामि भाषमाणायास्तथा प्रणिहिता ह्यसि ॥ ०१० ॥

सा त्वं धर्मं परिस्मृत्य वाचा चोक्त्वा मनस्विनि ।

कोपं संयच्छ गान्धारि मैवं भूः सत्यवादिनि ॥ ०११ ॥

गान्धार्युवाच ॥

भगवन्नाभ्यसूयामि नैतानिच्छामि नश्यतः ।
पुत्रशोकेन तु बलान्मनो विह्वलतीव मे ॥ ०१२ ॥

यथैव कुन्त्या कौन्तेया रक्षितव्यास्तथा मया ।
यथैव धृतराष्ट्रेण रक्षितव्यास्तथा मया ॥ ०१३ ॥

दुर्योधनापराधेन शकुनेः सौबलस्य च ।
कर्णदुःशासनाभ्यां च वृत्तोऽयं कुरुसङ्क्षयः ॥ ०१४ ॥

नापराध्यति बीभत्सुर्न च पार्थो वृकोदरः ।
नकुलः सहदेवो वा नैव जातु युधिष्ठिरः ॥ ०१५ ॥

युध्यमाना हि कौरव्याः कृन्तमानाः परस्परम् ।
निहताः सहिताश्चान्यैस्तत्र नास्त्यप्रियं मम ॥ ०१६ ॥

यत्तु कर्माकरोद्भीमो वासुदेवस्य पश्यतः ।
दुर्योधनं समाहूय गदायुद्धे महामनाः ॥ ०१७ ॥

शिक्षयाभ्यधिकं ज्ञात्वा चरन्तं बहुधा रणे ।
अधो नाभ्यां प्रहृतवांस्तन्मे कोपमवर्धयत् ॥ ०१८ ॥

कथं नु धर्मं धर्मज्ञैः समुद्दिष्टं महात्मभिः ।
त्यजेयुराहवे शूराः प्राणहेतोः कथञ्चन ॥ ०१९ ॥

# अध्याय ०१४

वैशंपायन उवाच ॥

तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत् ।
गान्धारीं प्रत्युवाचेदं वचः सानुनयं तदा ॥ ००१ ॥

अधर्मो यदि वा धर्मस्त्रासात्तत्र मया कृतः ।
आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि ॥ ००२ ॥

न हि युद्धेन पुत्रस्ते धर्मेण स महाबलः ।
शक्यः केनचिदुद्यन्तुमतो विषममाचरम् ॥ ००३ ॥

सैन्यस्यैकोऽवशिष्टोऽयं गदायुद्धे च वीर्यवान् ।
मां हत्वा न हरेद्राज्यमिति चैतत्कृतं मया ॥ ००४ ॥

राजपुत्रीं च पाञ्चालीमेकवस्त्रां रजस्वलाम् ।
भवत्या विदितं सर्वमुक्तवान्यत्सुतस्तव ॥ ००५ ॥

सुयोधनमसङ्गृह्य न शक्या भूः ससागरा ।
केवला भोक्तुमस्माभिरतश्चैतत्कृतं मया ॥ ००६ ॥

तच्चाप्यप्रियमस्माकं पुत्रस्ते समुपाचरत् ।
द्रौपद्या यत्सभामध्ये सव्यमूरुमदर्शयत् ॥ ००७ ॥

तत्रैव वध्यः सोऽस्माकं दुराचारोऽम्ब ते सुतः ।
धर्मराजाज्ञया चैव स्थिताः स्म समये तदा ॥ ००८ ॥

वैरमुद्धुक्षितं राज्ञि पुत्रेण तव तन्महत् ।
क्लेशिताश्च वने नित्यं तत एतत्कृतं मया ॥ ००९ ॥

वैरस्यास्य गतः पारं हत्वा दुर्योधनं रणे ।
राज्यं युधिष्ठिरः प्राप्तो वयं च गतमन्यवः ॥ ०१० ॥

गान्धार्युवाच ॥

न तस्यैष वधस्तात यत्प्रशंससि मे सुतम् ।
कृतवांश्चापि तत्सर्वं यदिदं भाषसे मयि ॥ ०११ ॥

हताश्वे नकुले यत्तद्वृषसेनेन भारत ।
अपिबः शोणितं संख्ये दुःशासनशरीरजम् ॥ ०१२ ॥

सद्भिर्विगर्हितं घोरमनार्यजनसेवितम् ।
क्रूरं कर्माकरोः कस्मात्तदयुक्तं वृकोदर ॥ ०१३ ॥

भीमसेन उवाच ॥

अन्यस्यापि न पातव्यं रुधिरं किं पुनः स्वकम् ।
यथैवात्मा तथा भ्राता विशेषो नास्ति कश्चन ॥ ०१४ ॥

रुधिरं न व्यतिक्रामद्दन्तोष्ठं मेऽम्ब मा शुचः ।
वैवस्वतस्तु तद्वेद हस्तौ मे रुधिरोक्षितौ ॥ ०१५ ॥

हताश्वं नकुलं दृष्ट्वा वृषसेनेन संयुगे ।
भ्रातॄणां संप्रहृष्टानां त्रासः सञ्जनितो मया ॥ ०१६ ॥

केशपक्षपरामर्शे द्रौपद्या द्यूतकारिते ।
क्रोधाद्यदब्रुवं चाहं तच्च मे हृदि वर्तते ॥ ०१७ ॥

क्षत्रधर्माच्च्युतो राज्ञि भवेयं शाश्वतीः समाः ।
प्रतिज्ञां तामनिस्तीर्य ततस्तत्कृतवानहम् ॥ ०१८ ॥

न मामर्हसि गान्धारि दोषेण परिशङ्कितुम् ।
अनिगृह्य पुरा पुत्रानस्मास्वनपकारिषु ॥ ०१९ ॥

गान्धार्युवाच ॥

वृद्धस्यास्य शतं पुत्रान्निघ्नंस्त्वमपराजितः ।
कस्मान्न शेषयः कञ्चिद्येनाल्पमपराधितम् ॥ ०२० ॥

संतानमावयोस्तात वृद्धयोर्हृतराज्ययोः ।
कथमन्धद्वयस्यास्य यष्टिरेका न वर्जिता ॥ ०२१ ॥

शेषे ह्यवस्थिते तात पुत्राणामन्तके त्वयि ।
न मे दुःखं भवेदेतद्यदि त्वं धर्ममाचरः ॥ ०२२ ॥

---

# अध्याय ०१५

वैशंपायन उवाच ॥

एवमुक्त्वा तु गान्धारी युधिष्ठिरमपृच्छत ।
क्व स राजेति सक्रोधा पुत्रपौत्रवधार्दिता ॥ ००१ ॥

तामभ्यगच्छद्राजेन्द्रो वेपमानः कृताञ्जलिः ।
युधिष्ठिर इदं चैनां मधुरं वाक्यमब्रवीत् ॥ ००२ ॥

पुत्रहन्ता नृशंसोऽहं तव देवि युधिष्ठिरः ।
शापार्हः पृथिवीनाशे हेतुभूतः शपस्व माम् ॥ ००३ ॥

न हि मे जीवितेनार्थो न राज्येन धनेन वा ।
तादृशान्सुहृदो हत्वा मूढस्यास्य सुहृद्द्रुहः ॥ ००४ ॥

तमेवंवादिनं भीतं संनिकर्षगतं तदा ।
नोवाच किञ्चिद्गान्धारी निःश्वासपरमा भृशम् ॥ ००५ ॥

तस्यावनतदेहस्य पादयोर्निपतिष्यतः ।
युधिष्ठिरस्य नृपतेर्धर्मज्ञा धर्मदर्शिनी ॥ ००६ ॥

अङ्गुल्यग्राणि ददृशे देवी पट्टान्तरेण सा ॥ ००६ ॥

ततः स कुनकीभूतो दर्शनीयनखो नृपः ।
तं दृष्ट्वा चार्जुनोऽगच्छद्वासुदेवस्य पृष्ठतः ॥ ००७ ॥

एवं सञ्चेष्टमानांस्तानितश्चेतश्च भारत ।
गान्धारी विगतक्रोधा सान्त्वयामास मातृवत् ॥ ००८ ॥

तया ते समनुज्ञाता मातरं वीरमातरम् ।
अभ्यगच्छन्त सहिताः पृथां पृथुलवक्षसः ॥ ००९ ॥

चिरस्य दृष्ट्वा पुत्रान्सा पुत्राधिभिरभिप्लुता ।
बाष्पमाहारयद्देवी वस्त्रेणावृत्य वै मुखम् ॥ ०१० ॥

ततो बाष्पं समुत्सृज्य सह पुत्रैस्तथा पृथा ।
अपश्यदेताञ्शस्त्रौघैर्बहुधा परिविक्षतान् ॥ ०११ ॥

सा तानेकैकशः पुत्रान्संस्पृशन्ती पुनः पुनः ।
अन्वशोचन्त दुःखार्ता द्रौपदीं च हतात्मजाम् ॥ ०१२ ॥

रुदतीमथ पाञ्चालीं ददर्श पतितां भुवि ॥ ०१२ ॥

द्रौपद्युवाच ॥

आर्ये पौत्राः क्व ते सर्वे सौभद्रसहिता गताः ।
न त्वां तेऽद्याभिगच्छन्ति चिरदृष्टां तपस्विनीम् ॥ ०१३ ॥

किं नु राज्येन वै कार्यं विहीनायाः सुतैर्मम ॥ ०१३ ॥

वैशंपायन उवाच ॥

तां समाश्वासयामास पृथा पृथुललोचना ।
उत्थाप्य याज्ञसेनीं तु रुदतीं शोककर्शिताम् ॥ ०१४ ॥

तयैव सहिता चापि पुत्रैरनुगता पृथा ।
अभ्यगच्छत गान्धारीमार्तामार्ततरा स्वयम् ॥ ०१५ ॥

तामुवाचाथ गान्धारी सह वध्वा यशस्विनीम् ।
मैवं पुत्रीति शोकार्ता पश्य मामपि दुःखिताम् ॥ ०१६ ॥

मन्ये लोकविनाशोऽयं कालपर्यायचोदितः ।
अवश्यभावी संप्राप्तः स्वभावाल्लोमहर्षणः ॥ ०१७ ॥

इदं तत्समनुप्राप्तं विदुरस्य वचो महत् ।
असिद्धानुनये कृष्णे यदुवाच महामतिः ॥ ०१८ ॥

तस्मिन्नपरिहार्येऽर्थे व्यतीते च विशेषतः ।
मा शुचो न हि शोच्यास्ते सङ्ग्रामे निधनं गताः ॥ ०१९ ॥

यथैव त्वं तथैवाहं को वा माश्वासयिष्यति ।
ममैव ह्यपराधेन कुलमग्र्यं विनाशितम् ॥ ०२० ॥

# अध्याय ०१६

वैशंपायन उवाच ॥

एवमुक्त्वा तु गान्धारी कुरूणामाविकर्तनम् ।
अपश्यत्तत्र तिष्ठन्ती सर्वं दिव्येन चक्षुषा ॥ ००१ ॥

पतिव्रता महाभागा समानव्रतचारिणी ।
उग्रेण तपसा युक्ता सततं सत्यवादिनी ॥ ००२ ॥

वरदानेन कृष्णस्य महर्षेः पुण्यकर्मणः ।
दिव्यज्ञानबलोपेता विविधं पर्यदेवयत् ॥ ००३ ॥

ददर्श सा बुद्धिमती दूरादपि यथान्तिके ।
रणाजिरं नृवीराणामद्भुतं लोमहर्षणम् ॥ ००४ ॥

अस्थिकेशपरिस्तीर्णं शोणितौघपरिप्लुतम् ।
शरीरैर्बहुसाहस्रैर्विनिकीर्णं समन्ततः ॥ ००५ ॥

गजाश्वरथयोधानामावृतं रुधिराविलैः ।
शरीरैरशिरस्कैश्च विदेहैश्च शिरोगणैः ॥ ००६ ॥

गजाश्वनरवीराणां निःसत्त्वैरभिसंवृतम् ।
सृगालबडकाकोलकङ्ककाकनिषेवितम् ॥ ००७ ॥

रक्षसां पुरुषादानां मोदनं कुरराकुलम् ।
अशिवाभिः शिवाभिश्च नादितं गृध्रसेवितम् ॥ ००८ ॥

ततो व्यासाभ्यनुज्ञातो धृतराष्ट्रो महीपतिः ।
पाण्डुपुत्राश्च ते सर्वे युधिष्ठिरपुरोगमाः ॥ ००९ ॥

वासुदेवं पुरस्कृत्य हतबन्धुं च पार्थिवम् ।
कुरुस्त्रियः समासाद्य जग्मुरायोधनं प्रति ॥ ०१० ॥

समासाद्य कुरुक्षेत्रं ताः स्त्रियो निहतेश्वराः ।
अपश्यन्त हतांस्तत्र पुत्रान्भ्रातॄन्पितॄन्पतीन् ॥ ०११ ॥

क्रव्यादैर्भक्ष्यमाणान्वै गोमायुबडवायसैः ।
भूतैः पिशाचै रक्षोभिर्विविधैश्च निशाचरैः ॥ ०१२ ॥

रुद्राक्रीडनिभं दृष्ट्वा तदा विशसनं स्त्रियः ।
महार्हेभ्योऽथ यानेभ्यो विक्रोशन्त्यो निपेतिरे ॥ ०१३ ॥

अदृष्टपूर्वं पश्यन्त्यो दुःखार्ता भरतस्त्रियः ।
शरीरेष्वस्खलन्नन्या न्यपतंश्चापरा भुवि ॥ ०१४ ॥

श्रान्तानां चाप्यनाथानां नासीत्काचन चेतना ।
पाञ्चालकुरुयोषाणां कृपणं तदभून्महत् ॥ ०१५ ॥

दुःखोपहतचित्ताभिः समन्तादनुनादितम् ।
दृष्ट्वायोधनमत्युग्रं धर्मज्ञा सुबलात्मजा ॥ ०१६ ॥

ततः सा पुण्डरीकाक्षमामन्त्र्य पुरुषोत्तमम् ।
कुरूणां वैशसं दृष्ट्वा दुःखाद्वचनमब्रवीत् ॥ ०१७ ॥

पश्यैताः पुण्डरीकाक्ष स्नुषा मे निहतेश्वराः ।
प्रकीर्णकेशाः क्रोशन्तीः कुररीरिव माधव ॥ ०१८ ॥

अमूस्त्वभिसमागम्य स्मरन्त्यो भरतर्षभान् ।

पृथगेवाभ्यधावन्त पुत्रान्भ्रातॄन्पितॄन्पतीन् ॥ ०१९ ॥

वीरसूभिर्महाबाहो हतपुत्राभिरावृतम् ।
क्वचिच्च वीरपत्नीभिर्हतवीराभिराकुलम् ॥ ०२० ॥

शोभितं पुरुषव्याघ्रैर्भीष्मकर्णाभिमन्युभिः ।
द्रोणद्रुपदशल्यैश्च ज्वलद्भिरिव पावकैः ॥ ०२१ ॥

काञ्चनैः कवचैर्निष्कैर्मणिभिश्च महात्मनाम् ।
अङ्गदैर्हस्तकेयूरैः स्रग्भिश्च समलङ्कृतम् ॥ ०२२ ॥

वीरबाहुविसृष्टाभिः शक्तिभिः परिघैरपि ।
खड्गैश्च विमलैस्तीक्ष्णैः सशरैश्च शरासनैः ॥ ०२३ ॥

क्रव्यादसंघैर्मुदितैस्तिष्ठद्भिः सहितैः क्वचित् ।
क्वचिदाक्रीडमानैश्च शयानैरपरैः क्वचित् ॥ ०२४ ॥

एतदेवंविधं वीर संपश्यायोधनं विभो ।
पश्यमाना च दह्यामि शोकेनाहं जनार्दन ॥ ०२५ ॥

पाञ्चालानां कुरूणां च विनाशं मधुसूदन ।
पञ्चानामिव भूतानां नाहं वधमचिन्तयम् ॥ ०२६ ॥

तान्सुपर्णाश्च गृध्राश्च निष्कर्षन्त्यसृगुक्षितान् ।
निगृह्य कवचेषूग्रा भक्षयन्ति सहस्रशः ॥ ०२७ ॥

जयद्रथस्य कर्णस्य तथैव द्रोणभीष्मयोः ।
अभिमन्योर्विनाशं च कश्चिन्तयितुमर्हति ॥ ०२८ ॥

अवध्यकल्पान्निहतान्दृष्ट्वाहं मधुसूदन ।
गृध्रकङ्कबडश्येनश्वसृगालादनीकृतान् ॥ ०२९ ॥

अमर्षवशमापन्नान्दुर्योधनवशे स्थितान् ।
पश्येमान्पुरुषव्याघ्रान्संशान्तान्पावकानिव ॥ ०३० ॥

शयनान्युचिताः सर्वे मृदूनि विमलानि च ।
विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते ॥ ०३१ ॥

बन्दिभिः सततं काले स्तुवद्भिरभिनन्दिताः ।
शिवानामशिवा घोराः शृण्वन्ति विविधा गिरः ॥ ०३२ ॥

ये पुरा शेरते वीराः शयनेषु यशस्विनः ।
चन्दनागुरुदिग्धाङ्गास्तेऽद्य पांसुषु शेरते ॥ ०३३ ॥

तेषामाभरणान्येते गृध्रगोमायुवायसाः ।
आक्षिपन्त्यशिवा घोरा विनदन्तः पुनः पुनः ॥ ०३४ ॥

चापानि विशिखान्पीतान्निस्त्रिंशान्विमला गदाः ।
युद्धाभिमानिनः प्रीता जीवन्त इव बिभ्रति ॥ ०३५ ॥

सुरूपवर्णा बहवः क्रव्यादैरवघट्टिताः ।
ऋषभप्रतिरूपाक्षाः शेरते हरितस्त्रजः ॥ ०३६ ॥

अपरे पुनरालिङ्ग्य गदाः परिघबाहवः ।
शेरतेऽभिमुखाः शूरा दयिता इव योषितः ॥ ०३७ ॥

बिभ्रतः कवचान्यन्ये विमलान्यायुधानि च ।
न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्दन ॥ ०३८ ॥

क्रव्यादैः कृष्यमाणानामपरेषां महात्मनाम् ।
शातकौम्भ्यः स्त्रजश्चित्रा विप्रकीर्णाः समन्ततः ॥ ०३९ ॥

एते गोमायवो भीमा निहतानां यशस्विनाम् ।
कण्ठान्तरगतान्हारानाक्षिपन्ति सहस्रशः ॥ ०४० ॥

सर्वेष्वपररात्रेषु याननन्दन्त बन्दिनः ।
स्तुतिभिश्च परार्ध्याभिरुपचारैश्च शिक्षिताः ॥ ०४१ ॥

तानिमाः परिदेवन्ति दुःखार्ताः परमाङ्गनाः ।
कृपणं वृष्णिशार्दूल दुःखशोकार्दिता भृशम् ॥ ०४२ ॥

रक्तोत्पलवनानीव विभान्ति रुचिराणि वै ।
मुखानि परमस्त्रीणां परिशुष्काणि केशव ॥ ०४३ ॥

रुदितोपरता ह्येता ध्यायन्त्यः संपरिप्लुताः ।
कुरुस्त्रियोऽभिगच्छन्ति तेन तेनैव दुःखिताः ॥ ०४४ ॥

एतान्यादित्यवर्णानि तपनीयनिभानि च ।
रोषरोदनताम्राणि वक्त्राणि कुरुयोषिताम् ॥ ०४५ ॥

आसामपरिपूर्णार्थं निशम्य परिदेवितम् ।
इतरेतरसङ्क्रन्दान्न विजानन्ति योषितः ॥ ०४६ ॥

एता दीर्घमिवोच्छ्वस्य विक्रुश्य च विलप्य च ।
विस्पन्दमाना दुःखेन वीरा जहति जीवितम् ॥ ०४७ ॥

बह्व्यो दृष्ट्वा शरीराणि क्रोशन्ति विलपन्ति च ।
पाणिभिश्चापरा घ्नन्ति शिरांसि मृदुपाणयः ॥ ०४८ ॥

शिरोभिः पतितैर्हस्तैः सर्वाङ्गैर्यूथशः कृतैः ।
इतरेतरसंपृक्तैराकीर्णा भाति मेदिनी ॥ ०४९ ॥

विशिरस्कानथो कायान्दृष्ट्वा घोराभिनन्दिनः ।

मुह्यन्त्यनुचिता नार्यो विदेहानि शिरांसि च ॥ ०५० ॥

शिरः कायेन संधाय प्रेक्षमाणा विचेतसः ।
अपश्यन्त्यो परं तत्र नेदमस्येति दुःखिताः ॥ ०५१ ॥

बाहूरुचरणानन्यान्विशिखोन्मथितान्पृथक् ।
संदधत्योऽसुखाविष्टा मूर्छन्त्येताः पुनः पुनः ॥ ०५२ ॥

उत्कृत्तशिरसश्चान्यान्विजग्धान्मृगपक्षिभिः ।
दृष्ट्वा काश्चिन्न जानन्ति भर्तॄन्भरतयोषितः ॥ ०५३ ॥

पाणिभिश्चापरा घ्नन्ति शिरांसि मधुसूदन ।
प्रेक्ष्य भ्रातॄन्पितॄन्पुत्रान्पतींश्च निहतान्परैः ॥ ०५४ ॥

बाहुभिश्च सखड्गैश्च शिरोभिश्च सकुण्डलैः ।
अगम्यकल्पा पृथिवी मांसशोणितकर्दमा ॥ ०५५ ॥

न दुःखेषूचिताः पूर्वं दुःखं गाहन्त्यनिन्दिताः ।
भ्रातृभिः पितृभिः पुत्रैरुपकीर्णां वसुंधराम् ॥ ०५६ ॥

यूथानीव किशोरीणां सुकेशीनां जनार्दन ।
स्नुषाणां धृतराष्ट्रस्य पश्य वृन्दान्यनेकशः ॥ ०५७ ॥

अतो दुःखतरं किं नु केशव प्रतिभाति मे ।
यदिमाः कुर्वते सर्वा रूपमुच्चावचं स्त्रियः ॥ ०५८ ॥

नूनमाचरितं पापं मया पूर्वेषु जन्मसु ।
या पश्यामि हतान्पुत्रान्पौत्रान्भ्रातॄंश्च केशव ॥ ०५९ ॥

एवमार्ता विलपती ददर्श निहतं सुतम् ॥ ०५९ ॥

# अध्याय ०१७

वैशंपायन उवाच ॥

ततो दुर्योधनं दृष्ट्वा गान्धारी शोककर्शिता ।
सहसा न्यपतद्भूमौ छिन्नेव कदली वने ॥ ००१ ॥

सा तु लब्ध्वा पुनः सञ्ज्ञां विक्रुश्य च पुनः पुनः ।
दुर्योधनमभिप्रेक्ष्य शयानं रुधिरोक्षितम् ॥ ००२ ॥

परिष्वज्य च गान्धारी कृपणं पर्यदेवयत् ।
हा हा पुत्रेति शोकार्ता विललापाकुलेन्द्रिया ॥ ००३ ॥

सुगूढजत्रु विपुलं हारनिष्कनिषेवितम् ।
वारिणा नेत्रजेनोरः सिञ्चन्ती शोकतापिता ॥ ००४ ॥

समीपस्थं हृषीकेशमिदं वचनमब्रवीत् ॥ ००४ ॥

उपस्थितेऽस्मिन्सङ्ग्रामे ज्ञातीनां सङ्क्षये विभो ।
मामयं प्राह वार्ष्णेय प्राञ्जलिर्नृपसत्तमः ॥ ००५ ॥

अस्मिञ्ज्ञातिसमुद्धर्षे जयमम्बा ब्रवीतु मे ॥ ००५ ॥

इत्युक्ते जानती सर्वमहं स्वं व्यसनागमम् ।
अब्रुवं पुरुषव्याघ्र यतो धर्मस्ततो जयः ॥ ००६ ॥

यथा न युध्यमानस्त्वं संप्रमुह्यसि पुत्रक ।

ध्रुवं शस्त्रजिता.ण्ल्लोकान्प्राप्तास्यमरवद्विभो ॥ ००७ ॥

इत्येवमब्रुवं पूर्वं नैनं शोचामि वै प्रभो ।
धृतराष्ट्रं तु शोचामि कृपणं हतबान्धवम् ॥ ००८ ॥

अमर्षणं युधां श्रेष्ठं कृतास्त्रं युद्धदुर्मदम् ।
शयानं वीरशयने पश्य माधव मे सुतम् ॥ ००९ ॥

योऽयं मूर्धावसिक्तानामग्रे याति परंतपः ।
सोऽयं पांसुषु शेतेऽद्य पश्य कालस्य पर्ययम् ॥ ०१० ॥

ध्रुवं दुर्योधनो वीरो गतिं नसुलभां गतः ।
तथा ह्यभिमुखः शेते शयने वीरसेविते ॥ ०११ ॥

यं पुरा पर्युपासीना रमयन्ति महीक्षितः ।
महीतलस्थं निहतं गृध्रास्तं पर्युपासते ॥ ०१२ ॥

यं पुरा व्यजनैरग्र्यैरुपवीजन्ति योषितः ।
तमद्य पक्षव्यजनैरुपवीजन्ति पक्षिणः ॥ ०१३ ॥

एष शेते महाबाहुर्बलवान्सत्यविक्रमः ।
सिंहेनेव द्विपः संख्ये भीमसेनेन पातितः ॥ ०१४ ॥

पश्य दुर्योधनं कृष्ण शयानं रुधिरोक्षितम् ।
निहतं भीमसेनेन गदामुद्यम्य भारत ॥ ०१५ ॥

अक्षौहिणीर्महाबाहुर्दश चैकां च केशव ।
अनयद्यः पुरा संख्ये सोऽनयान्निधनं गतः ॥ ०१६ ॥

एष दुर्योधनः शेते महेष्वासो महारथः ।
शार्दूल इव सिंहेन भीमसेनेन पातितः ॥ ०१७ ॥

विदुरं ह्यवमन्यैष पितरं चैव मन्दभाक् ।
बालो वृद्धावमानेन मन्दो मृत्युवशं गतः ॥ ०१८ ॥

निःसपत्ना मही यस्य त्रयोदश समाः स्थिता ।
स शेते निहतो भूमौ पुत्रो मे पृथिवीपतिः ॥ ०१९ ॥

अपश्यं कृष्ण पृथिवीं धार्तराष्ट्रानुशासनात् ।
पूर्णां हस्तिगवाश्वस्य वार्ष्णेय न तु तच्चिरम् ॥ ०२० ॥

तामेवाद्य महाबाहो पश्याम्यन्यानुशासनात् ।
हीनां हस्तिगवाश्वेन किं नु जीवामि माधव ॥ ०२१ ॥

इदं कृच्छ्रतरं पश्य पुत्रस्यापि वधान्मम ।
यदिमाः पर्युपासन्ते हताञ्शूरान्रणे स्त्रियः ॥ ०२२ ॥

प्रकीर्णकेशां सुश्रोणीं दुर्योधनभुजाङ्कगाम् ।
रुक्मवेदीनिभां पश्य कृष्ण लक्ष्मणमातरम् ॥ ०२३ ॥

नूनमेषा पुरा बाला जीवमाने महाभुजे ।
भुजावाश्रित्य रमते सुभुजस्य मनस्विनी ॥ ०२४ ॥

कथं तु शतधा नेदं हृदयं मम दीर्यते ।
पश्यन्त्या निहतं पुत्रं पुत्रेण सहितं रणे ॥ ०२५ ॥

पुत्रं रुधिरसंसिक्तमुपजिघ्रत्यनिन्दिता ।
दुर्योधनं तु वामोरूः पाणिना परिमार्जति ॥ ०२६ ॥

किं नु शोचति भर्तारं पुत्रं चैषा मनस्विनी ।
तथा ह्यवस्थिता भाति पुत्रं चाप्यभिवीक्ष्य सा ॥ ०२७ ॥

स्वशिरः पञ्चशाखाभ्यामभिहत्यायतेक्षणा ।
पतत्युरसि वीरस्य कुरुराजस्य माधव ॥ ०२८ ॥

पुण्डरीकनिभा भाति पुण्डरीकान्तरप्रभा ।
मुखं विमृज्य पुत्रस्य भर्तुश्चैव तपस्विनी ॥ ०२९ ॥

यदि चाप्यागमाः सन्ति यदि वा श्रुतयस्तथा ।
ध्रुवं लोकानवाप्तोऽयं नृपो बाहुबलार्जितान् ॥ ०३० ॥

---

# अध्याय ०१८

गान्धार्युवाच ॥

पश्य माधव पुत्रान्मे शतसंख्याञ्जितक्लमान् ।
गदया भीमसेनेन भूयिष्ठं निहतान्रणे ॥ ००१ ॥

इदं दुःखतरं मेऽद्य यदिमा मुक्तमूर्धजाः ।
हतपुत्रा रणे बालाः परिधावन्ति मे स्नुषाः ॥ ००२ ॥

प्रासादतलचारिण्यश्चरणैर्भूषणान्वितैः ।
आपन्ना यत्स्पृशन्तीमा रुधिरार्द्रां वसुंधराम् ॥ ००३ ॥

गृध्रानुत्सारयन्त्यश्च गोमायून्वायसांस्तथा ।
शोकेनार्ता विघूर्णन्त्यो मत्ता इव चरन्त्युत ॥ ००४ ॥

एषान्या त्वनवद्याङ्गी करसंमितमध्यमा ।
घोरं तद्वैशसं दृष्ट्वा निपतत्यतिदुःखिता ॥ ००५ ॥

दृष्ट्वा मे पार्थिवसुतामेतां लक्ष्मणमातरम् ।
राजपुत्रीं महाबाहो मनो न व्युपशाम्यति ॥ ००६ ॥

भ्रातृंश्चान्याः पतींश्चान्याः पुत्रांश्च निहतान्भुवि ।
दृष्ट्वा परिपतन्त्येताः प्रगृह्य सुभुजा भुजान् ॥ ००७ ॥

मध्यमानां तु नारीणां वृद्धानां चापराजित ।
आक्रन्दं हतबन्धूनां दारुणे वैशसे शृणु ॥ ००८ ॥

रथनीडानि देहांश्च हतानां गजवाजिनाम् ।
आश्रिताः श्रममोहार्ताः स्थिताः पश्य महाबल ॥ ००९ ॥

अन्या चापहृतं कायाच्चारुकुण्डलमुन्नसम् ।
स्वस्य बन्धोः शिरः कृष्ण गृहीत्वा पश्य तिष्ठति ॥ ०१० ॥

पूर्वजातिकृतं पापं मन्ये नाल्पमिवानघ ।
एताभिरनवद्याभिर्मया चैवाल्पमेधया ॥ ०११ ॥

तदिदं धर्मराजेन यातितं नो जनार्दन ।
न हि नाशोऽस्ति वार्ष्णेय कर्मणोः शुभपापयोः ॥ ०१२ ॥

प्रत्यग्रवयसः पश्य दर्शनीयकुचोदराः ।
कुलेषु जाता ह्रीमत्यः कृष्णपक्षाक्षिमूर्धजाः ॥ ०१३ ॥

हंसगद्गदभाषिण्यो दुःखशोकप्रमोहिताः ।
सारस्य इव वाशन्त्यः पतिताः पश्य माधव ॥ ०१४ ॥

फुल्लपद्मप्रकाशानि पुण्डरीकाक्ष योषिताम् ।
अनवद्यानि वक्त्राणि तपत्यसुखरश्मिवान् ॥ ०१५ ॥

ईर्षूणां मम पुत्राणां वासुदेवावरोधनम् ।
मत्तमातङ्गदर्पाणां पश्यन्त्यद्य पृथग्जनाः ॥ ०१६ ॥

शतचन्द्राणि चर्माणि ध्वजांश्चादित्यसंनिभान् ।
रौक्माणि चैव वर्माणि निष्कानपि च काञ्चनान् ॥ ०१७ ॥

शीर्षत्राणानि चैतानि पुत्राणां मे महीतले ।
पश्य दीप्तानि गोविन्द पावकान्सुहुतानिव ॥ ०१८ ॥

एष दुःशासनः शेते शूरेणामित्रघातिना ।
पीतशोणितसर्वाङ्गो भीमसेनेन पातितः ॥ ०१९ ॥

गदया वीरघातिन्या पश्य माधव मे सुतम् ।
द्यूतक्लेशाननुस्मृत्य द्रौपद्या चोदितेन च ॥ ०२० ॥

उक्ता ह्यनेन पाञ्चाली सभायां द्यूतनिर्जिता ।
प्रियं चिकीर्षता भ्रातुः कर्णस्य च जनार्दन ॥ ०२१ ॥

सहैव सहदेवेन नकुलेनार्जुनेन च ।
दासभार्यासि पाञ्चालि क्षिप्रं प्रविश नो गृहान् ॥ ०२२ ॥

ततोऽहमब्रुवं कृष्ण तदा दुर्योधनं नृपम् ।
मृत्युपाशपरिक्षिप्तं शकुनिं पुत्र वर्जय ॥ ०२३ ॥

निबोधैनं सुदुर्बुद्धिं मातुलं कलहप्रियम् ।
क्षिप्रमेनं परित्यज्य पुत्र शाम्यस्व पाण्डवैः ॥ ०२४ ॥

न बुध्यसे त्वं दुर्बुद्धे भीमसेनममर्षणम् ।
वाङ्नाराचैस्तुदंस्तीक्ष्णैरुल्काभिरिव कुञ्जरम् ॥ ०२५ ॥

तानेष रभसः क्रूरो वाक्शल्यानवधारयन् ।

उत्ससर्ज विषं तेषु सर्पो गोवृषभेष्विव ॥ ०२६ ॥

एष दुःशासनः शेते विक्षिप्य विपुलौ भुजौ ।
निहतो भीमसेनेन सिंहेनेव महर्षभः ॥ ०२७ ॥

अत्यर्थमकरोद्रौद्रं भीमसेनोऽत्यमर्षणः ।
दुःशासनस्य यत्क्रुद्धोऽपिबच्छोणितमाहवे ॥ ०२८ ॥

---

# अध्याय ०१९

गान्धार्युवाच ॥

एष माधव पुत्रो मे विकर्णः प्राज्ञसंमतः ।
भूमौ विनिहतः शेते भीमेन शतधा कृतः ॥ ००१ ॥

गजमध्यगतः शेते विकर्णो मधुसूदन ।
नीलमेघपरिक्षिप्तः शरदीव दिवाकरः ॥ ००२ ॥

अस्य चापग्रहेणैष पाणिः कृतकिणो महान् ।
कथञ्चिच्छिद्यते गृध्रैरत्तुकामैस्तलत्रवान् ॥ ००३ ॥

अस्य भार्यामिषप्रेप्सून्गृध्रानेतांस्तपस्विनी ।
वारयत्यनिशं बाला न च शक्नोति माधव ॥ ००४ ॥

युवा वृन्दारकः शूरो विकर्णः पुरुषर्षभ ।
सुखोचितः सुखार्हश्च शेते पांसुषु माधव ॥ ००५ ॥

कर्णिनालीकनाराचैर्भिन्नमर्माणमाहवे ।

अद्यापि न जहात्येनं लक्ष्मीर्भरतसत्तमम् ॥ ००६ ॥

एष सङ्ग्रामशूरेण प्रतिज्ञां पालयिष्यता ।
दुर्मुखोऽभिमुखः शेते हतोऽरिगणहा रणे ॥ ००७ ॥

तस्यैतद्वदनं कृष्ण श्वापदैरर्धभक्षितम् ।
विभात्यभ्यधिकं तात सप्तम्यामिव चन्द्रमाः ॥ ००८ ॥

शूरस्य हि रणे कृष्ण यस्याननमथेदृशम् ।
स कथं निहतोऽमित्रैः पांसून्ग्रसति मे सुतः ॥ ००९ ॥

यस्याहवमुखे सौम्य स्थाता नैवोपपद्यते ।
स कथं दुर्मुखोऽमित्रैर्हतो विबुधलोकजित् ॥ ०१० ॥

चित्रसेनं हतं भूमौ शयानं मधुसूदन ।
धार्तराष्ट्रमिमं पश्य प्रतिमानं दनुष्मताम् ॥ ०११ ॥

तं चित्रमाल्याभरणं युवत्यः शोककर्शिताः ।
क्रव्यादसंघैः सहिता रुदन्त्यः पर्युपासते ॥ ०१२ ॥

स्त्रीणां रुदितनिर्घोषः श्वापदानां च गर्जितम् ।
चित्ररूपमिदं कृष्ण विचित्रं प्रतिभाति मे ॥ ०१३ ॥

युवा वृन्दारको नित्यं प्रवरस्त्रीनिषेवितः ।
विविंशतिरसौ शेते ध्वस्तः पांसुषु माधव ॥ ०१४ ॥

शरसङ्कृत्तवर्माणं वीरं विशसने हतम् ।
परिवार्यासते गृध्राः परिविंशा विविंशतिम् ॥ ०१५ ॥

प्रविश्य समरे वीरः पाण्डवानामनीकिनीम् ।
आविश्य शयने शेते पुनः सत्पुरुषोचितम् ॥ ०१६ ॥

स्मितोपपन्नं सुनसं सुभ्रु ताराधिपोपमम् ।
अतीव शुभ्रं वदनं पश्य कृष्ण विविंशतेः ॥ ०१७ ॥

यं स्म तं पर्युपासन्ते वसुं वासवयोषितः ।
क्रीडन्तमिव गन्धर्वं देवकन्याः सहस्रशः ॥ ०१८ ॥

हन्तारं वीरसेनानां शूरं समितिशोभनम् ।
निबर्हणममित्राणां दुःसहं विषहेत कः ॥ ०१९ ॥

दुःसहस्यैतदाभाति शरीरं संवृतं शरैः ।
गिरिरात्मरुहैः फुल्लैः कर्णिकारैरिवावृतः ॥ ०२० ॥

शातकौम्भ्या स्रजा भाति कवचेन च भास्वता ।
अग्निनेव गिरिः श्वेतो गतासुरपि दुःसहः ॥ ०२१ ॥

---

# उत्तराविलापः

## अध्याय ०२०

गान्धार्युवाच ॥

अध्यर्धगुणमाहुर्यं बले शौर्ये च माधव ।
पित्रा त्वया च दाशार्ह दृप्तं सिंहमिवोत्कटम् ॥ ००१ ॥

यो बिभेद चमूमेको मम पुत्रस्य दुर्भिदाम् ।
स भूत्वा मृत्युरन्येषां स्वयं मृत्युवशं गतः ॥ ००२ ॥

तस्योपलक्षये कृष्ण कार्ष्णेरमिततेजसः ।
अभिमन्योर्हतस्यापि प्रभा नैवोपशाम्यति ॥ ००३ ॥

एषा विराटदुहिता स्नुषा गाण्डीवधन्वनः ।
आर्ता बाला पतिं वीरं शोच्या शोचत्यनिन्दिता ॥ ००४ ॥

तमेषा हि समासाद्य भार्या भर्तारमन्तिके ।
विराटदुहिता कृष्ण पाणिना परिमार्जति ॥ ००५ ॥

तस्य वक्त्रमुपाघ्राय सौभद्रस्य यशस्विनी ।
विबुद्धकमलाकारं कम्बुवृत्तशिरोधरम् ॥ ००६ ॥

काम्यरूपवती चैषा परिष्वजति भामिनी ।
लज्जमाना पुरेवैनं माध्वीकमदमूर्छिता ॥ ००७ ॥

तस्य क्षतजसंदिग्धं जातरूपपरिष्कृतम् ।
विमुच्य कवचं कृष्ण शरीरमभिवीक्षते ॥ ००८ ॥

अवेक्षमाणा तं बाला कृष्ण त्वामभिभाषते ।
अयं ते पुण्डरीकाक्ष सदृशाक्षो निपातितः ॥ ००९ ॥

बले वीर्ये च सदृशस्तेजसा चैव तेऽनघ ।
रूपेण च तवात्यर्थं शेते भुवि निपातितः ॥ ०१० ॥

अत्यन्तसुकुमारस्य राङ्कवाजिनशायिनः ।
कच्चिदद्य शरीरं ते भूमौ न परितप्यते ॥ ०११ ॥

मातङ्गभुजवर्ष्माणौ ज्याक्षेपकठिनत्वचौ ।
काञ्चनाङ्गदिनौ शेषे निक्षिप्य विपुलौ भुजौ ॥ ०१२ ॥

व्यायम्य बहुधा नूनं सुखसुप्तः श्रमादिव ।
एवं विलपतीमार्तां न हि मामभिभाषसे ॥ ०१३ ॥

आर्यामार्य सुभद्रां त्वमिमांश्च त्रिदशोपमान् ।
पितॄन्मां चैव दुःखार्तां विहाय क्व गमिष्यसि ॥ ०१४ ॥

तस्य शोणितसंदिग्धान्केशानुन्नाम्य पाणिना ।
उत्सङ्गे वक्त्रमाधाय जीवन्तमिव पृच्छति ॥ ०१५ ॥

स्वस्रीयं वासुदेवस्य पुत्रं गाण्डीवधन्वनः ॥ ०१५ ॥

कथं त्वां रणमध्यस्थं जघ्नुरेते महारथाः ।
धिगस्तु क्रूरकर्तॄंस्तान्कृपकर्णजयद्रथान् ॥ ०१६ ॥

द्रोणद्रौणायनी चोभौ यैरसि व्यसनीकृतः ।
रथर्षभाणां सर्वेषां कथमासीत्तदा मनः ॥ ०१७ ॥

बालं त्वां परिवार्यैकं मम दुःखाय जघ्नुषाम् ।
कथं नु पाण्डवानां च पाञ्चालानां च पश्यताम् ॥ ०१८ ॥

त्वं वीर निधनं प्राप्तो नाथवान्सन्ननाथवत् ॥ ०१८ ॥

दृष्ट्वा बहुभिराक्रन्दे निहतं त्वामनाथवत् ।
वीरः पुरुषशार्दूलः कथं जीवति पाण्डवः ॥ ०१९ ॥

न राज्यलाभो विपुलः शत्रूणां वा पराभवः ।
प्रीतिं दास्यति पार्थानां त्वामृते पुष्करेक्षण ॥ ०२० ॥

तव शस्त्रजिता.ण्ल्लोकान्धर्मेण च दमेन च ।
क्षिप्रमन्वागमिष्यामि तत्र मां प्रतिपालय ॥ ०२१ ॥

दुर्मरं पुनरप्राप्ते काले भवति केनचित् ।
यदहं त्वां रणे दृष्ट्वा हतं जीवामि दुर्भगा ॥ ०२२ ॥

कामिदानीं नरव्याघ्र श्लक्ष्णया स्मितया गिरा ।
पितृलोके समेत्यान्यां मामिवामन्त्रयिष्यसि ॥ ०२३ ॥

नूनमप्सरसां स्वर्गे मनांसि प्रमथिष्यसि ।
परमेण च रूपेण गिरा च स्मितपूर्वया ॥ ०२४ ॥

प्राप्य पुण्यकृता.ण्ल्लोकानप्सरोभिः समेयिवान् ।
सौभद्र विहरन्काले स्मरेथाः सुकृतानि मे ॥ ०२५ ॥

एतावानिह संवासो विहितस्ते मया सह ।
षण्मासान्सप्तमे मासि त्वं वीर निधनं गतः ॥ ०२६ ॥

इत्युक्तवचनामेतामपकर्षन्ति दुःखिताम् ।
उत्तरां मोघसङ्कल्पां मत्स्यराजकुलस्त्रियः ॥ ०२७ ॥

उत्तरामपकृष्यैनामार्तामार्ततराः स्वयम् ।
विराटं निहतं दृष्ट्वा क्रोशन्ति विलपन्ति च ॥ ०२८ ॥

द्रोणास्त्रशरसङ्कृत्तं शयानं रुधिरोक्षितम् ।
विराटं वितुदन्त्येते गृध्रगोमायुवायसाः ॥ ०२९ ॥

वितुद्यमानं विहगैर्विराटमसितेक्षणाः ।
न शक्नुवन्ति विवशा निवर्तयितुमातुराः ॥ ०३० ॥

आसामातपतप्तानामायासेन च योषिताम् ।
श्रमेण च विवर्णानां रूपाणां विगतं वपुः ॥ ०३१ ॥

उत्तरं चाभिमन्युं च काम्बोजं च सुदक्षिणम् ।

शिशूनेतान्हतान्पश्य लक्ष्मणं च सुदर्शनम् ॥ ०३२ ॥

आयोधनशिरोमध्ये शयानं पश्य माधव ॥ ०३२ ॥

---

# अध्याय ०२१

गान्धार्युवाच ॥

एष वैकर्तनः शेते महेष्वासो महारथः ।
ज्वलितानलवत्संख्ये संशान्तः पार्थतेजसा ॥ ००१ ॥

पश्य वैकर्तनं कर्णं निहत्यातिरथान्बहून् ।
शोणितौघपरीताङ्गं शयानं पतितं भुवि ॥ ००२ ॥

अमर्षी दीर्घरोषश्च महेष्वासो महारथः ।
रणे विनिहतः शेते शूरो गाण्डीवधन्वना ॥ ००३ ॥

यं स्म पाण्डवसंत्रासान्मम पुत्रा महारथाः ।
प्रायुध्यन्त पुरस्कृत्य मातङ्गा इव यूथपम् ॥ ००४ ॥

शार्दूलमिव सिंहेन समरे सव्यसाचिना ।
मातङ्गमिव मत्तेन मातङ्गेन निपातितम् ॥ ००५ ॥

समेताः पुरुषव्याघ्र निहतं शूरमाहवे ।
प्रकीर्णमूर्धजाः पत्न्यो रुदत्यः पर्युपासते ॥ ००६ ॥

उद्विग्नः सततं यस्माद्धर्मराजो युधिष्ठिरः ।
त्रयोदश समा निद्रां चिन्तयन्नाध्यगच्छत ॥ ००७ ॥

अनाधृष्यः परैर्युद्धे शत्रुभिर्मघवानिव ।
युगान्ताग्निरिवार्चिष्मान्हिमवानिव च स्थिरः ॥ ००८ ॥

स भूत्वा शरणं वीरो धार्तराष्ट्रस्य माधव ।
भूमौ विनिहतः शेते वातरुग्ण इव द्रुमः ॥ ००९ ॥

पश्य कर्णस्य पत्नीं त्वं वृषसेनस्य मातरम् ।
लालप्यमानाः करुणं रुदतीं पतितां भुवि ॥ ०१० ॥

आचार्यशापोऽनुगतो ध्रुवं त्वां ; यदग्रसच्चक्रमियं धरा ते ।
ततः शरेणापहृतं शिरस्ते ; धनञ्जयेनाहवे शत्रुमध्ये ॥ ०११ ॥

अहो धिगेषा पतिता विसञ्ज्ञा ; समीक्ष्य जाम्बूनदबद्धनिष्कम् ।
कर्णं महाबाहुमदीनसत्त्वं ; सुषेणमाता रुदती भृशार्ता ॥ ०१२ ॥

अल्पावशेषो हि कृतो महात्मा ; शरीरभक्षैः परिभक्षयद्भिः ।
द्रष्टुं न संप्रीतिकरः शशीव ; कृष्णस्य पक्षस्य चतुर्दशाहे ॥ ०१३ ॥

सावर्तमाना पतिता पृथिव्या ;मुत्थाय दीना पुनरेव चैषा ।
कर्णस्य वक्त्रं परिजिघ्रमाणा ; रोरूयते पुत्रवधाभितप्ता ॥ ०१४ ॥

---

# अध्याय ०२२

गान्धार्युवाच ॥

आवन्त्यं भीमसेनेन भक्षयन्ति निपातितम् ।

गृध्रगोमायवः शूरं बहुबन्धुमबन्धुवत् ॥ ००१ ॥

तं पश्य कदनं कृत्वा शत्रूणां मधुसूदन ।
शयानं वीरशयने रुधिरेण समुक्षितम् ॥ ००२ ॥

तं सृगालाश्च कङ्काश्च क्रव्यादाश्च पृथग्विधाः ।
तेन तेन विकर्षन्ति पश्य कालस्य पर्ययम् ॥ ००३ ॥

शयानं वीरशयने वीरमाक्रन्दसारिणम् ।
आवन्त्यमभितो नार्यो रुदत्यः पर्युपासते ॥ ००४ ॥

प्रातिपीयं महेष्वासं हतं भल्लेन बाह्लिकम् ।
प्रसुप्तमिव शार्दूलं पश्य कृष्ण मनस्विनम् ॥ ००५ ॥

अतीव मुखवर्णोऽस्य निहतस्यापि शोभते ।
सोमस्येवाभिपूर्णस्य पौर्णमास्यां समुद्यतः ॥ ००६ ॥

पुत्रशोकाभितप्तेन प्रतिज्ञां परिरक्षता ।
पाकशासनिना संख्ये वार्द्धक्षत्रिर्निपातितः ॥ ००७ ॥

एकादश चमूर्जित्वा रक्ष्यमाणं महात्मना ।
सत्यं चिकीर्षता पश्य हतमेनं जयद्रथम् ॥ ००८ ॥

सिन्धुसौवीरभर्तारं दर्पपूर्णं मनस्विनम् ।
भक्षयन्ति शिवा गृध्रा जनार्दन जयद्रथम् ॥ ००९ ॥

संरक्ष्यमाणं भार्याभिरनुरक्ताभिरच्युत ।
भषन्तो व्यपकर्षन्ति गहनं निम्नमन्तिकात् ॥ ०१० ॥

तमेताः पर्युपासन्ते रक्षमाणा महाभुजम् ।
सिन्धुसौवीरगान्धारकाम्बोजयवनस्त्रियः ॥ ०११ ॥

यदा कृष्णामुपादाय प्राद्रवत्केकयैः सह ।
तदैव वध्यः पाण्डूनां जनार्दन जयद्रथः ॥ ०१२ ॥

दुःशलां मानयद्भिस्तु यदा मुक्तो जयद्रथः ।
कथमद्य न तां कृष्ण मानयन्ति स्म ते पुनः ॥ ०१३ ॥

सैषा मम सुता बाला विलपन्ती सुदुःखिता ।
प्रमापयति चात्मानमाक्रोशति च पाण्डवान् ॥ ०१४ ॥

किं नु दुःखतरं कृष्ण परं मम भविष्यति ।
यत्सुता विधवा बाला स्नुषाश्च निहतेश्वराः ॥ ०१५ ॥

अहो धिग्दुःशलां पश्य वीतशोकभयामिव ।
शिरो भर्तुरनासाद्य धावमानामितस्ततः ॥ ०१६ ॥

वारयामास यः सर्वान्पाण्डवान्पुत्रगृद्धिनः ।
स हत्वा विपुलाः सेनाः स्वयं मृत्युवशं गतः ॥ ०१७ ॥

तं मत्तमिव मातङ्गं वीरं परमदुर्जयम् ।
परिवार्य रुदन्त्येताः स्त्रियश्चन्द्रोपमाननाः ॥ ०१८ ॥

---

# अध्याय ०२३

गान्धार्युवाच ॥

एष शल्यो हतः शेते साक्षान्नकुलमातुलः ।
धर्मज्ञेन सता तात धर्मराजेन संयुगे ॥ ००१ ॥

यस्त्वया स्पर्धते नित्यं सर्वत्र पुरुषर्षभ ।
स एष निहतः शेते मद्रराजो महारथः ॥ ००२ ॥

येन सङ्गृह्णता तात रथमाधिरथेर्युधि ।
जयार्थं पाण्डुपुत्राणां तथा तेजोवधः कृतः ॥ ००३ ॥

अहो धिक्पश्य शल्यस्य पूर्णचन्द्रसुदर्शनम् ।
मुखं पद्मपलाशाक्षं वडैरादष्टमव्रणम् ॥ ००४ ॥

एषा चामीकराभस्य तप्तकाञ्चनसप्रभा ।
आस्याद्विनिःसृता जिह्वा भक्ष्यते कृष्ण पक्षिभिः ॥ ००५ ॥

युधिष्ठिरेण निहतं शल्यं समितिशोभनम् ।
रुदन्त्यः पर्युपासन्ते मद्रराजकुलस्त्रियः ॥ ००६ ॥

एताः सुसूक्ष्मवसना मद्रराजं नरर्षभम् ।
क्रोशन्त्यभिसमासाद्य क्षत्रियाः क्षत्रियर्षभम् ॥ ००७ ॥

शल्यं निपतितं नार्यः परिवार्याभितः स्थिताः ।
वाशिता गृष्टयः पङ्के परिमग्नमिवर्षभम् ॥ ००८ ॥

शल्यं शरणदं शूरं पश्यैनं रथसत्तमम् ।
शयानं वीरशयने शरैर्विशकलीकृतम् ॥ ००९ ॥

एष शैलालयो राजा भगदत्तः प्रतापवान् ।
गजाङ्कुशधरः श्रेष्ठः शेते भुवि निपातितः ॥ ०१० ॥

यस्य रुक्ममयी माला शिरस्येषा विराजते ।
श्वापदैर्भक्ष्यमाणस्य शोभयन्तीव मूर्धजान् ॥ ०११ ॥

एतेन किल पार्थस्य युद्धमासीत्सुदारुणम् ।
लोमहर्षणमत्युग्रं शक्रस्य बलिना यथा ॥ ०१२ ॥

योधयित्वा महाबाहुरेष पार्थं धनञ्जयम् ।
संशयं गमयित्वा च कुन्तीपुत्रेण पातितः ॥ ०१३ ॥

यस्य नास्ति समो लोके शौर्ये वीर्ये च कश्चन ।
स एष निहतः शेते भीष्मो भीष्मकृदाहवे ॥ ०१४ ॥

पश्य शांतनवं कृष्ण शयानं सूर्यवर्चसम् ।
युगान्त इव कालेन पातितं सूर्यमम्बरात् ॥ ०१५ ॥

एष तप्त्वा रणे शत्रूञ्शस्त्रतापेन वीर्यवान् ।
नरसूर्योऽस्तमभ्येति सूर्योऽस्तमिव केशव ॥ ०१६ ॥

शरतल्पगतं वीरं धर्मे देवापिना समम् ।
शयानं वीरशयने पश्य शूरनिषेविते ॥ ०१७ ॥

कर्णिनालीकनाराचैरास्तीर्य शयनोत्तमम् ।
आविश्य शेते भगवान्स्कन्दः शरवणं यथा ॥ ०१८ ॥

अतूलपूर्णं गाङ्गेयस्त्रिभिर्बाणैः समन्वितम् ।
उपधायोपधानाग्र्यं दत्तं गाण्डीवधन्वना ॥ ०१९ ॥

पालयानः पितुः शास्त्रमूर्ध्वरेता महायशाः ।
एष शांतनवः शेते माधवाप्रतिमो युधि ॥ ०२० ॥

धर्मात्मा तात धर्मज्ञः पारंपर्येण निर्णये ।
अमर्त्य इव मर्त्यः सन्नेष प्राणानधारयत् ॥ ०२१ ॥

नास्ति युद्धे कृती कश्चिन्न विद्वान्न पराक्रमी ।

यत्र शांतनवो भीष्मः शेतेऽद्य निहतः परैः ॥ ०२२ ॥

स्वयमेतेन शूरेण पृच्छ्यमानेन पाण्डवैः ।
धर्मज्ञेनाहवे मृत्युराख्यातः सत्यवादिना ॥ ०२३ ॥

प्रनष्टः कुरुवंशश्च पुनर्येन समुद्धृतः ।
स गतः कुरुभिः सार्धं महाबुद्धिः पराभवम् ॥ ०२४ ॥

धर्मेषु कुरवः कं नु परिप्रक्ष्यन्ति माधव ।
गते देवव्रते स्वर्गं देवकल्पे नरर्षभे ॥ ०२५ ॥

अर्जुनस्य विनेतारमाचार्यं सात्यकेस्तथा ।
तं पश्य पतितं द्रोणं कुरूणां गुरुसत्तमम् ॥ ०२६ ॥

अस्त्रं चतुर्विधं वेद यथैव त्रिदशेश्वरः ।
भार्गवो वा महावीर्यस्तथा द्रोणोऽपि माधव ॥ ०२७ ॥

यस्य प्रसादाद्बीभत्सुः पाण्डवः कर्म दुष्करम् ।
चकार स हतः शेते नैनमस्त्राण्यपालयन् ॥ ०२८ ॥

यं पुरोधाय कुरव आह्वयन्ति स्म पाण्डवान् ।
सोऽयं शस्त्रभृतां श्रेष्ठो द्रोणः शस्त्रैः पृथक्कृतः ॥ ०२९ ॥

यस्य निर्दहतः सेनां गतिरग्नेरिवाभवत् ।
स भूमौ निहतः शेते शान्तार्चिरिव पावकः ॥ ०३० ॥

धनुर्मुष्टिरशीर्णश्च हस्तावापश्च माधव ।
द्रोणस्य निहतस्यापि दृश्यते जीवतो यथा ॥ ०३१ ॥

वेदा यस्माच्च चत्वारः सर्वास्त्राणि च केशव ।
अनपेतानि वै शूराद्यथैवादौ प्रजापतेः ॥ ०३२ ॥

वन्दनार्हाविमौ तस्य बन्दिभिर्वन्दितौ शुभौ ।
गोमायवो विकर्षन्ति पादौ शिष्यशतार्चितौ ॥ ०३३ ॥

द्रोणं द्रुपदपुत्रेण निहतं मधुसूदन ।
कृपी कृपणमन्वास्ते दुःखोपहतचेतना ॥ ०३४ ॥

तां पश्य रुदतीमार्तां मुक्तकेशीमधोमुखीम् ।
हतं पतिमुपासन्तीं द्रोणं शस्त्रभृतां वरम् ॥ ०३५ ॥

बाणैर्भिन्नतनुत्राणं धृष्टद्युम्नेन केशव ।
उपास्ते वै मृधे द्रोणं जटिला ब्रह्मचारिणी ॥ ०३६ ॥

प्रेतकृत्ये च यतते कृपी कृपणमातुरा ।
हतस्य समरे भर्तुः सुकुमारी यशस्विनी ॥ ०३७ ॥

अग्नीनाहृत्य विधिवच्चितां प्रज्वाल्य सर्वशः ।
द्रोणमाधाय गायन्ति त्रीणि सामानि सामगाः ॥ ०३८ ॥

किरन्ति च चितामेते जटिला ब्रह्मचारिणः ।
धनुर्भिः शक्तिभिश्चैव रथनीडैश्च माधव ॥ ०३९ ॥

शस्त्रैश्च विविधैरन्यैर्धक्ष्यन्ते भूरितेजसम् ।
त एते द्रोणमाधाय शंसन्ति च रुदन्ति च ॥ ०४० ॥

सामभिस्त्रिभिरन्तःस्थैरनुशंसन्ति चापरे ।
अग्नावग्निमिवाधाय द्रोणं हुत्वा हुताशने ॥ ०४१ ॥

गच्छन्त्यभिमुखा गङ्गां द्रोणशिष्या द्विजातयः ।
अपसव्यां चितिं कृत्वा पुरस्कृत्य कृपीं तदा ॥ ०४२ ॥

# अध्याय ०२४

गान्धार्युवाच ॥

सोमदत्तसुतं पश्य युयुधानेन पातितम् ।
वितुद्यमानं विहगैर्बहुभिर्माधवान्तिके ॥ ००१ ॥

पुत्रशोकाभिसंतप्तः सोमदत्तो जनार्दन ।
युयुधानं महेष्वासं गर्हयन्निव दृश्यते ॥ ००२ ॥

असौ तु भूरिश्रवसो माता शोकपरिप्लुता ।
आश्वासयति भर्तारं सोमदत्तमनिन्दिता ॥ ००३ ॥

दिष्ट्या नेदं महाराज दारुणं भरतक्षयम् ।
कुरुसङ्क्रन्दनं घोरं युगान्तमनुपश्यसि ॥ ००४ ॥

दिष्ट्या यूपध्वजं वीरं पुत्रं भूरिसहस्रदम् ।
अनेकक्रतुयज्वानं निहतं नाद्य पश्यसि ॥ ००५ ॥

दिष्ट्या स्नुषाणामाक्रन्दे घोरं विलपितं बहु ।
न श्रृणोषि महाराज सारसीनामिवार्णवे ॥ ००६ ॥

एकवस्त्रानुसंवीताः प्रकीर्णासितमूर्धजाः ।
स्नुषास्ते परिधावन्ति हतापत्या हतेश्वराः ॥ ००७ ॥

श्वापदैर्भक्ष्यमाणं त्वमहो दिष्ट्या न पश्यसि ।
छिन्नबाहुं नरव्याघ्रमर्जुनेन निपातितम् ॥ ००८ ॥

शलं विनिहतं संख्ये भूरिश्रवसमेव च ।
स्नुषाश्च विधवाः सर्वा दिष्ट्या नाद्येह पश्यसि ॥ ००९ ॥

दिष्ट्या तत्काञ्चनं छत्रं यूपकेतोर्महात्मनः ।
विनिकीर्णं रथोपस्थे सौमदत्तेर्न पश्यसि ॥ ०१० ॥

अमूस्तु भूरिश्रवसो भार्याः सात्यकिना हतम् ।
परिवार्यानुशोचन्ति भर्तारमसितेक्षणाः ॥ ०११ ॥

एता विलप्य बहुलं भर्तृशोकेन कर्शिताः ।
पतन्त्यभिमुखा भूमौ कृपणं बत केशव ॥ ०१२ ॥

बीभत्सुरतिबीभत्सं कर्मेदमकरोत्कथम् ।
प्रमत्तस्य यदच्छैत्सीद्बाहुं शूरस्य यज्वनः ॥ ०१३ ॥

ततः पापतरं कर्म कृतवानपि सात्यकिः ।
यस्मात्प्रायोपविष्टस्य प्राहार्षीत्संशितात्मनः ॥ ०१४ ॥

एको द्वाभ्यां हतः शेषे त्वमधर्मेण धार्मिकः ।
इति यूपध्वजस्यैताः स्त्रियः क्रोशन्ति माधव ॥ ०१५ ॥

भार्या यूपध्वजस्यैषा करसंमितमध्यमा ।
कृत्वोत्सङ्गे भुजं भर्तुः कृपणं पर्यदेवयत् ॥ ०१६ ॥

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ०१७ ॥

वासुदेवस्य सांनिध्ये पार्थेनाक्लिष्टकर्मणा ।
युध्यतः समरेऽन्येन प्रमत्तस्य निपातितः ॥ ०१८ ॥

किं नु वक्ष्यसि संसत्सु कथासु च जनार्दन ।
अर्जुनस्य महत्कर्म स्वयं वा स किरीटवान्  ॥ ०१९  ॥

इत्येवं गर्हयित्वैषा तूष्णीमास्ते वराङ्गना ।
तामेतामनुशोचन्ति सपत्न्यः स्वामिव स्नुषाम्  ॥ ०२०  ॥

गान्धारराजः शकुनिर्बलवान्सत्यविक्रमः ।
निहतः सहदेवेन भागिनेयेन मातुलः  ॥ ०२१  ॥

यः पुरा हेमदण्डाभ्यां व्यजनाभ्यां स्म वीज्यते ।
स एष पक्षिभिः पक्षैः शयान उपवीज्यते  ॥ ०२२  ॥

यः स्म रूपाणि कुरुते शतशोऽथ सहस्रशः ।
तस्य मायाविनो माया दग्धाः पाण्डवतेजसा  ॥ ०२३  ॥

मायया निकृतिप्रज्ञो जितवान्यो युधिष्ठिरम् ।
सभायां विपुलं राज्यं स पुनर्जीवितं जितः  ॥ ०२४  ॥

शकुन्ताः शकुनिं कृष्ण समन्तात्पर्युपासते ।
कितवं मम पुत्राणां विनाशायोपशिक्षितम्  ॥ ०२५  ॥

एतेनैतन्महद्वैरं प्रसक्तं पाण्डवैः सह ।
वधाय मम पुत्राणामात्मनः सगणस्य च  ॥ ०२६  ॥

यथैव मम पुत्राणां लोकाः शस्त्रजिताः प्रभो ।
एवमस्यापि दुर्बुद्धेर्लोकाः शस्त्रेण वै जिताः  ॥ ०२७  ॥

कथं च नायं तत्रापि पुत्रान्मे भ्रातृभिः सह ।
विरोधयेदृजुप्रज्ञाननृजुर्मधुसूदन  ॥ ०२८  ॥

# अध्याय ०२५

गान्धार्युवाच ॥

काम्बोजं पश्य दुर्धर्षं काम्बोजास्तरणोचितम् ।
शयानमृषभस्कन्धं हतं पांसुशु माधव ॥ ००१ ॥

यस्य क्षतजसंदिग्धौ बाहू चन्दनरूषितौ ।
अवेक्ष्य कृपणं भार्या विलपत्यतिदुःखिता ॥ ००२ ॥

इमौ तौ परिघप्रख्यौ बाहू शुभतलाङ्गुली ।
ययोर्विवरमापन्नां न रतिर्मां पुराजहत् ॥ ००३ ॥

कां गतिं नु गमिष्यामि त्वया हीना जनेश्वर ।
दूरबन्धुरनाथेव अतीव मधुरस्वरा ॥ ००४ ॥

आतपे क्लाम्यमानानां विविधानामिव स्रजाम् ।
क्लान्तानामपि नारीणां न श्रीर्जहति वै तनुम् ॥ ००५ ॥

शयानमभितः शूरं कालिङ्गं मधुसूदन ।
पश्य दीप्ताङ्गदयुगप्रतिबद्धमहाभुजम् ॥ ००६ ॥

मागधानामधिपतिं जयत्सेनं जनार्दन ।
परिवार्य प्ररुदिता मागध्यः पश्य योषितः ॥ ००७ ॥

आसामायतनेत्राणां सुस्वराणां जनार्दन ।
मनःश्रुतिहरो नादो मनो मोहयतीव मे ॥ ००८ ॥

प्रकीर्णसर्वाभरणा रुदन्त्यः शोककर्शिताः ।

स्वास्तीर्णशयनोपेता मागध्यः शेरते भुवि ॥ ००९ ॥

कोसलानामधिपतिं राजपुत्रं बृहद्बलम् ।
भर्तारं परिवार्यैताः पृथक्प्ररुदिताः स्त्रियः ॥ ०१० ॥

अस्य गात्रगतान्बाणान्कार्ष्णिबाहुबलार्पितान् ।
उद्धरन्त्यसुखाविष्टा मूर्छमानाः पुनः पुनः ॥ ०११ ॥

आसां सर्वानवद्यानामातपेन परिश्रमात् ।
प्रम्लाननलिनाभानि भान्ति वक्त्राणि माधव ॥ ०१२ ॥

द्रोणेन निहताः शूराः शेरते रुचिराङ्गदाः ।
द्रोणेनाभिमुखाः सर्वे भ्रातरः पञ्च केकयाः ॥ ०१३ ॥

तप्तकाञ्चनवर्माणस्ताम्रध्वजरथस्रजः ।
भासयन्ति महीं भासा ज्वलिता इव पावकाः ॥ ०१४ ॥

द्रोणेन द्रुपदं संख्ये पश्य माधव पातितम् ।
महाद्विपमिवारण्ये सिंहेन महता हतम् ॥ ०१५ ॥

पाञ्चालराज्ञो विपुलं पुण्डरीकाक्ष पाण्डुरम् ।
आतपत्रं समाभाति शरदीव दिवाकरः ॥ ०१६ ॥

एतास्तु द्रुपदं वृद्धं स्नुषा भार्याश्च दुःखिताः ।
दग्ध्वा गच्छन्ति पाञ्चाल्यं राजानमपसव्यतः ॥ ०१७ ॥

धृष्टकेतुं महेष्वासं चेदिपुङ्गवमङ्गनाः ।
द्रोणेन निहतं शूरं हरन्ति हृतचेतसः ॥ ०१८ ॥

द्रोणास्त्रमभिहत्यैष विमर्दे मधुसूदन ।
महेष्वासो हतः शेते नद्या हृत इव द्रुमः ॥ ०१९ ॥

एष चेदिपतिः शूरो धृष्टकेतुर्महारथः ।
शेते विनिहतः संख्ये हत्वा शत्रून्सहस्रशः ॥ ०२० ॥

वितुद्यमानं विहगैस्तं भार्याः प्रत्युपस्थिताः ।
चेदिराजं हृषीकेश हतं सबलबान्धवम् ॥ ०२१ ॥

दाशार्हीपुत्रजं वीरं शयानं सत्यविक्रमम् ।
आरोप्याङ्के रुदन्त्येताश्चेदिराजवराङ्गनाः ॥ ०२२ ॥

अस्य पुत्रं हृषीकेश सुवक्त्रं चारुकुण्डलम् ।
द्रोणेन समरे पश्य निकृत्तं बहुधा शरैः ॥ ०२३ ॥

पितरं नूनमाजिस्थं युध्यमानं परैः सह ।
नाजहात्पृष्ठतो वीरमद्यापि मधुसूदन ॥ ०२४ ॥

एवं ममापि पुत्रस्य पुत्रः पितरमन्वगात् ।
दुर्योधनं महाबाहो लक्ष्मणः परवीरहा ॥ ०२५ ॥

विन्दानुविन्दावावन्त्यौ पतितौ पश्य माधव ।
हिमान्ते पुष्पितौ शालौ मरुता गलिताविव ॥ ०२६ ॥

काञ्चनाङ्गदवर्माणौ बाणखड्गधनुर्धरौ ।
ऋषभप्रतिरूपाक्षौ शयानौ विमलस्रजौ ॥ ०२७ ॥

अवध्याः पाण्डवाः कृष्ण सर्व एव त्वया सह ।
ये मुक्ता द्रोणभीष्माभ्यां कर्णाद्वैकर्तनात्कृपात् ॥ ०२८ ॥

दुर्योधनाद्द्रोणसुतात्सैन्धवाच्च महारथात् ।
सोमदत्ताद्विकर्णाच्च शूराच्च कृतवर्मणः ॥ ०२९ ॥

ये हन्युः शस्त्रवेगेन देवानपि नरर्षभाः ॥ ०२९ ॥

त इमे निहताः संख्ये पश्य कालस्य पर्ययम् ।
नातिभारोऽस्ति दैवस्य ध्रुवं माधव कश्चन ॥ ०३० ॥

यदिमे निहताः शूराः क्षत्रियैः क्षत्रियर्षभाः ॥ ०३० ॥

तदैव निहताः कृष्ण मम पुत्रास्तरस्विनः ।
यदैवाकृतकामस्त्वमुपप्लव्यं गतः पुनः ॥ ०३१ ॥

शंतनोश्चैव पुत्रेण प्राज्ञेन विदुरेण च ।
तदैवोक्तास्मि मा स्नेहं कुरुष्वात्मसुतेष्विति ॥ ०३२ ॥

तयोर्न दर्शनं तात मिथ्या भवितुमर्हति ।
अचिरेणैव मे पुत्रा भस्मीभूता जनार्दन ॥ ०३३ ॥

वैशंपायन उवाच ॥

इत्युक्त्वा न्यपतद्भूमौ गान्धारी शोककर्शिता ।
दुःखोपहतविज्ञाना धैर्यमुत्सृज्य भारत ॥ ०३४ ॥

ततः कोपपरीताङ्गी पुत्रशोकपरिप्लुता ।
जगाम शौरिं दोषेण गान्धारी व्यथितेन्द्रिया ॥ ०३५ ॥

गान्धार्युवाच ॥

पाण्डवा धार्तराष्ट्राश्च द्रुग्धाः कृष्ण परस्परम् ।
उपेक्षिता विनश्यन्तस्त्वया कस्माज्जनार्दन ॥ ०३६ ॥

शक्तेन बहुभृत्येन विपुले तिष्ठता बले ।
उभयत्र समर्थेन श्रुतवाक्येन चैव ह ॥ ०३७ ॥

इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन ।
यस्मात्त्वया महाबाहो फलं तस्मादवाप्नुहि ॥ ०३८ ॥

पतिशुश्रूषया यन्मे तपः किञ्चिदुपार्जितम् ।
तेन त्वां दुरवापात्मञ्शप्स्ये चक्रगदाधर ॥ ०३९ ॥

यस्मात्परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः ।
उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन्वधिष्यसि ॥ ०४० ॥

त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन ।
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ॥ ०४१ ॥

कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि ॥ ०४१ ॥

तवाप्येवं हतसुता निहतज्ञातिबान्धवाः ।
स्त्रियः परिपतिष्यन्ति यथैता भरतस्त्रियः ॥ ०४२ ॥

वैशंपायन उवाच ॥

तच्छ्रुत्वा वचनं घोरं वासुदेवो महामनाः ।
उवाच देवीं गान्धारीमीषदभ्युत्स्मयन्निव ॥ ०४३ ॥

संहर्ता वृष्णिचक्रस्य नान्यो मद्विद्यते शुभे ।
जानेऽहमेतदप्येवं चीर्णं चरसि क्षत्रिये ॥ ०४४ ॥

अवध्यास्ते नरैरन्यैरपि वा देवदानवैः ।
परस्परकृतं नाशमतः प्राप्स्यन्ति यादवाः ॥ ०४५ ॥

इत्युक्तवति दाशार्हे पाण्डवास्त्रस्तचेतसः ।
बभूवुर्भृशसंविग्ना निराशाश्चापि जीविते ॥ ०४६ ॥

# श्राद्धपर्व

## अध्याय ०२६

वासुदेव उवाच ॥

उत्तिष्ठोत्तिष्ठ गान्धारि मा च शोके मनः कृथाः ।
तवैव ह्यपराधेन कुरवो निधनं गताः ॥ ००१ ॥

या त्वं पुत्रं दुरात्मानमीर्षुमत्यन्तमानिनम् ।
दुर्योधनं पुरस्कृत्य दुष्कृतं साधु मन्यसे ॥ ००२ ॥

निष्ठुरं वैरपरुषं वृद्धानां शासनातिगम् ।
कथमात्मकृतं दोषं मय्याधातुमिहेच्छसि ॥ ००३ ॥

मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ००४ ॥

तपोर्थीयं ब्राह्मणी धत्त गर्भं ; गौर्वोढारं धावितारं तुरङ्गी ।
शूद्रा दासं पशुपालं तु वैश्या ; वधार्थीयं त्वद्विधा राजपुत्री ॥ ००५ ॥

वैशंपायन उवाच ॥

तच्छ्रुत्वा वासुदेवस्य पुनरुक्तं वचोऽप्रियम् ।
तूष्णीं बभूव गान्धारी शोकव्याकुललोचना ॥ ००६ ॥

धृतराष्ट्रस्तु राजर्षिर्निगृह्याबुद्धिजं तमः ।
पर्यपृच्छत धर्मात्मा धर्मराजं युधिष्ठिरम् ॥ ००७ ॥

जीवतां परिमाणज्ञः सैन्यानामसि पाण्डव ।
हतानां यदि जानीषे परिमाणं वदस्व मे ॥ ००८ ॥

युधिष्ठिर उवाच ॥

दशायुतानामयुतं सहस्राणि च विंशतिः ।
कोट्यः षष्टिश्च षट्चैव येऽस्मिन्राजमृधे हताः ॥ ००९ ॥

अलक्ष्याणां तु वीराणां सहस्राणि चतुर्दश ।
दश चान्यानि राजेन्द्र शतं षष्टिश्च पञ्च च ॥ ०१० ॥

धृतराष्ट्र उवाच ॥

युधिष्ठिर गतिं कां ते गताः पुरुषसत्तमाः ।
आचक्ष्व मे महाबाहो सर्वज्ञो ह्यसि मे मतः ॥ ०११ ॥

युधिष्ठिर उवाच ॥

यैर्हुतानि शरीराणि हृष्टैः परमसंयुगे ।
देवराजसमा.ण्ल्लोकान्गतास्ते सत्यविक्रमाः ॥ ०१२ ॥

ये त्वहृष्टेन मनसा मर्तव्यमिति भारत ।
युध्यमाना हताः संख्ये ते गन्धर्वैः समागताः ॥ ०१३ ॥

ये तु सङ्ग्रामभूमिष्ठा याचमानाः पराङ्मुखाः ।
शस्त्रेण निधनं प्राप्ता गतास्ते गुह्यकान्प्रति ॥ ०१४ ॥

पीड्यमानाः परैर्ये तु हीयमाना निरायुधाः ।

ह्रीनिषेधा महात्मानः परानभिमुखा रणे ॥ ०१५ ॥

छिद्यमानाः शितैः शस्त्रैः क्षत्रधर्मपरायणाः ।
गतास्ते ब्रह्मसदनं हता वीराः सुवर्चसः ॥ ०१६ ॥

ये तत्र निहता राजन्नन्तरायोधनं प्रति ।
यथा कथञ्चित्ते राजन्संप्राप्ता उत्तरान्कुरून् ॥ ०१७ ॥

धृतराष्ट्र उवाच ॥

केन ज्ञानबलेनैवं पुत्र पश्यसि सिद्धवत् ।
तन्मे वद महाबाहो श्रोतव्यं यदि वै मया ॥ ०१८ ॥

युधिष्ठिर उवाच ॥

निदेशाद्भवतः पूर्वं वने विचरता मया ।
तीर्थयात्राप्रसङ्गेन संप्राप्तोऽयमनुग्रहः ॥ ०१९ ॥

देवर्षिर्लोमशो दृष्टस्ततः प्राप्तोऽस्म्यनुस्मृतिम् ।
दिव्यं चक्षुरपि प्राप्तं ज्ञानयोगेन वै पुरा ॥ ०२० ॥

धृतराष्ट्र उवाच ॥

येऽत्रानाथा जनस्यास्य सनाथा ये च भारत ।
कच्चित्तेषां शरीराणि धक्ष्यन्ति विधिपूर्वकम् ॥ ०२१ ॥

न येषां सन्ति कर्तारो न च येऽत्राहिताग्नयः ।
वयं च कस्य कुर्यामो बहुत्वात्तात कर्मणः ॥ ०२२ ॥

यान्सुपर्णाश्च गृध्राश्च विकर्षन्ति ततस्ततः ।
तेषां तु कर्मणा लोका भविष्यन्ति युधिष्ठिर ॥ ०२३ ॥

वैशंपायन उवाच ॥

एवमुक्तो महाप्राज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
आदिदेश सुधर्माणं धौम्यं सूतं च सञ्जयम् ॥ ०२४ ॥

विदुरं च महाबुद्धिं युयुत्सुं चैव कौरवम् ।
इन्द्रसेनमुखांश्चैव भृत्यान्सूतांश्च सर्वशः ॥ ०२५ ॥

भवन्तः कारयन्त्वेषां प्रेतकार्याणि सर्वशः ।
यथा चानाथवत्किञ्चिच्छरीरं न विनश्यति ॥ ०२६ ॥

शासनाद्धर्मराजस्य क्षत्ता सूतश्च सञ्जयः ।
सुधर्मा धौम्यसहित इन्द्रसेनादयस्तथा ॥ ०२७ ॥

चन्दनागुरुकाष्ठानि तथा कालीयकान्युत ।
घृतं तैलं च गन्धांश्च क्षौमाणि वसनानि च ॥ ०२८ ॥

समाहृत्य महार्हाणि दारूणां चैव सञ्चयान् ।
रथांश्च मृदितांस्तत्र नानाप्रहरणानि च ॥ ०२९ ॥

चिताः कृत्वा प्रयत्नेन यथामुख्यान्नराधिपान् ।
दाहयामासुरव्यग्रा विधिदृष्टेन कर्मणा ॥ ०३० ॥

दुर्योधनं च राजानं भ्रातृंश्चास्य शताधिकान् ।
शल्यं शलं च राजानं भूरिश्रवसमेव च ॥ ०३१ ॥

जयद्रथं च राजानमभिमन्युं च भारत ।
दौःशासनिं लक्ष्मणं च धृष्टकेतुं च पार्थिवम् ॥ ०३२ ॥

बृहन्तं सोमदत्तं च सृञ्जयांश्च शताधिकान् ।

राजानं क्षेमधन्वानं विराटद्रुपदौ तथा ॥ ०३३ ॥

शिखण्डिनं च पाञ्चाल्यं धृष्टद्युम्नं च पार्षतम् ।
युधामन्युं च विक्रान्तमुत्तमौजसमेव च ॥ ०३४ ॥

कौसल्यं द्रौपदेयांश्च शकुनिं चापि सौबलम् ।
अचलं वृषकं चैव भगदत्तं च पार्थिवम् ॥ ०३५ ॥

कर्णं वैकर्तनं चैव सहपुत्रममर्षणम् ।
केकयांश्च महेष्वासांस्त्रिगर्तांश्च महारथान् ॥ ०३६ ॥

घटोत्कचं राक्षसेन्द्रं बकभ्रातरमेव च ।
अलम्बुसं च राजानं जलसंधं च पार्थिवम् ॥ ०३७ ॥

अन्यांश्च पार्थिवान्राजञ्शतशोऽथ सहस्रशः ।
घृतधाराहुतैर्दीप्तैः पावकैः समदाहयन् ॥ ०३८ ॥

पितृमेधाश्च केषाञ्चिदवर्तन्त महात्मनाम् ।
सामभिश्चाप्यगायन्त तेऽन्वशोच्यन्त चापरैः ॥ ०३९ ॥

साम्नामृचां च नादेन स्त्रीणां च रुदितस्वनैः ।
कश्मलं सर्वभूतानां निशायां समपद्यत ॥ ०४० ॥

ते विधूमाः प्रदीप्ताश्च दीप्यमानाश्च पावकाः ।
नभसीवान्वदृश्यन्त ग्रहास्तन्वभ्रसंवृताः ॥ ०४१ ॥

ये चाप्यनाथास्तत्रासन्नानादेशसमागताः ।
तांश्च सर्वान्समानाय्य राशीन्कृत्वा सहस्रशः ॥ ०४२ ॥

चित्वा दारुभिरव्यग्रः प्रभूतैः स्नेहतापितैः ।
दाहयामास विदुरो धर्मराजस्य शासनात् ॥ ०४३ ॥

कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः ।
धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत्  ॥ ०४४  ॥

---

# जलप्रदानिकपर्व

## अध्याय ०२७

वैशंपायन उवाच  ॥

ते समासाद्य गङ्गां तु शिवां पुण्यजनोचिताम् ।
ह्रदिनीं वप्रसंपन्नां महानूपां महावनाम्  ॥ ००१  ॥

भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च ।
ततः पितॄणां पौत्राणां भ्रातॄणां स्वजनस्य च  ॥ ००२  ॥

पुत्राणामार्यकाणां च पतीनां च कुरुस्त्रियः ।
उदकं चक्रिरे सर्वा रुदन्त्यो भृशदुःखिताः  ॥ ००३  ॥

सुहृदां चापि धर्मज्ञाः प्रचक्रुः सलिलक्रियाः  ॥ ००३  ॥

उदके क्रियमाणे तु वीराणां वीरपत्निभिः ।
सूपतीर्थाभवद्गङ्गा भूयो विप्रससार च  ॥ ००४  ॥

तन्महोदधिसङ्काशं निरानन्दमनुत्सवम् ।
वीरपत्नीभिराकीर्णं गङ्गातीरमशोभत  ॥ ००५  ॥

ततः कुन्ती महाराज सहसा शोककर्शिता ।
रुदती मन्दया वाचा पुत्रान्वचनमब्रवीत्  ॥ ००६  ॥

यः स शूरो महेष्वासो रथयूथपयूथपः ।
अर्जुनेन हतः संख्ये वीरलक्षणलक्षितः  ॥ ००७  ॥

यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः ।
यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः  ॥ ००८  ॥

प्रत्ययुध्यत यः सर्वान्पुरा वः सपदानुगान् ।
दुर्योधनबलं सर्वं यः प्रकर्षन्व्यरोचत  ॥ ००९  ॥

यस्य नास्ति समो वीर्ये पृथिव्यामपि कश्चन ।
सत्यसंधस्य शूरस्य सङ्ग्रामेष्वपलायिनः  ॥ ०१०  ॥

कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ।
स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत  ॥ ०११  ॥

कुण्डली कवची शूरो दिवाकरसमप्रभः  ॥ ०११  ॥

श्रुत्वा तु पाण्डवाः सर्वे मातुर्वचनमप्रियम् ।
कर्णमेवानुशोचन्त भूयश्चार्ततराभवन्  ॥ ०१२  ॥

ततः स पुरुषव्याघ्रः कुन्तीपुत्रो युधिष्ठिरः ।
उवाच मातरं वीरो निःश्वसन्निव पन्नगः  ॥ ०१३  ॥

यस्येषुपातमासाद्य नान्यस्तिष्ठेद्धनञ्जयात् ।
कथं पुत्रो भवत्यां स देवगर्भः पुराभवत्  ॥ ०१४  ॥

यस्य बाहुप्रतापेन तापिताः सर्वतो वयम् ।
तमग्निमिव वस्त्रेण कथं छादितवत्यसि  ॥ ०१५  ॥

यस्य बाहुबलं घोरं धार्तराष्ट्रैरुपासितम् ॥ ०१५ ॥

नान्यः कुन्तीसुतात्कर्णादगृह्णाद्रथिनां रथी ।
स नः प्रथमजो भ्राता सर्वशस्त्रभृतां वरः ॥ ०१६ ॥

असूत तं भवत्यग्रे कथमद्भुतविक्रमम् ॥ ०१६ ॥

अहो भवत्या मन्त्रस्य पिधानेन वयं हताः ।
निधनेन हि कर्णस्य पीडिताः स्म सबान्धवाः ॥ ०१७ ॥

अभिमन्योर्विनाशेन द्रौपदेयवधेन च ।
पाञ्चालानां च नाशेन कुरूणां पतनेन च ॥ ०१८ ॥

ततः शतगुणं दुःखमिदं मामस्पृशद्भृशम् ।
कर्णमेवानुशोचन्हि दह्याम्यग्नाविवाहितः ॥ ०१९ ॥

न हि स्म किञ्चिदप्राप्यं भवेदपि दिवि स्थितम् ।
न च स्म वैशसं घोरं कौरवान्तकरं भवेत् ॥ ०२० ॥

एवं विलप्य बहुलं धर्मराजो युधिष्ठिरः ।
विनदञ्शनकै राजंश्चकारास्योदकं प्रभुः ॥ ०२१ ॥

ततो विनेदुः सहसा स्त्रीपुंसास्तत्र सर्वशः ।
अभितो ये स्थितास्तत्र तस्मिन्नुदककर्मणि ॥ ०२२ ॥

तत आनाययामास कर्णस्य सपरिच्छदम् ।
स्त्रियः कुरुपतिर्धीमान्भ्रातुः प्रेम्णा युधिष्ठिरः ॥ ०२३ ॥

स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम् ।
कृत्वोत्ततार गङ्गायाः सलिलादाकुलेन्द्रियः ॥ ०२४ ॥

